यत् । वा । दासी । आर्द्रऽहस्ता । सम्ऽअङ्क्ते । उलूखलम् । मुसलम् । शुम्भत । आपः ॥ १३ ॥

**अयं ग्रावा पृथुबुध्नो वयोधाः पूतः पवित्रैरप हन्तु रक्षः ।**
**आ रोह चर्म महि शर्म यच्छ मा दंपती पौत्रमघं नि गाताम् ॥१४॥**

अयम् । ग्रावा । पृथुऽबुध्नः । वयःऽधाः । पूतः । पवित्रैः । अप । हन्तु । रक्षः ।
आ । रोह । चर्म । महि । शर्म । यच्छ । मा । दंपती इति दम्ऽपती । पौत्रम् । अघम् ।
नि । गाताम् ॥ १४ ॥

**वनस्पतिः सह देवैर्न आगन् रक्षः पिशाचाँ अपबाधमानः ।**
**स उच्छ्रयाते प्र वदाति वाचं तेन लोकाँ अभि सर्वान् जयेम ॥ १५ ॥**

वनस्पतिः । सह । देवैः । नः । आ । अगन् । रक्षः । पिशाचान् । अपऽबाधमानः ।
सः । उत् । श्रयाते । प्र । वदाति । वाचम् । तेन । लोकान् । अभि । सर्वान् । जयेम ॥ १५ ॥

**सप्त मेधान् पशवः पर्यगृह्णन् य एषां ज्योतिष्माँ उत यश्चकर्श ।**
**त्रयस्त्रिंशद् देवतास्तान्त्सचन्ते स नः स्वर्गमभि नेष लोकम् ॥ १६ ॥**

सप्त । मेधान् । पशवः । परि । अगृह्णन् । यः । एषाम् । ज्योतिष्मान् । उत । यः । चकर्श ।
त्रयःऽत्रिंशत् । देवताः । तान् । सचन्ते । सः । नः । स्वःऽगम् । अभि । नेष । लोकम् ॥ १६ ॥

**स्वर्गं लोकमभि नो नयासि सं जायया सह पुत्रैः स्याम ।**
**गृह्णामि हस्तमनु मैत्वत्र मा नस्तारीन्निर्ऋतिर्मो अरातिः ॥ १७ ॥**

स्वःऽगम् । लोकम् । अभि । नः । नयासि । सम् । जायया । सह । पुत्रैः । स्याम ।
गृह्णामि । हस्तम् । अनु । मा । आ । एतु । अत्र । मा । नः । तारीत् । निःऽऋतिः । मो
इति । अरातिः ॥ १७ ॥

**ग्राहिं पाप्मानमति ताँ अयाम तमो व्यस्य प्र वदासि वल्गु ।**
**वानस्पत्य उद्यतो मा जिहिंसीर्मा तण्डुलं वि शरीर्देवयन्तम् ॥ १८ ॥**

ग्राहिम् । पाप्मानम् । अति । तान् । अयाम । तमः । वि । अस्य । प्र । वदासि । वल्गु ।
वानस्पत्यः । उत्ऽयतः । मा । जिहिंसीः । मा । तण्डुलम् । वि । शरीः । देवऽयन्तम् ॥ १८ ॥

---

१ P सम्ऽअक्ते ।. २ E R पिशाचैं. ३ E लोक. ४ P वदति ।. We with P̊ J Cp. ५ E R ज्योतिष्मैं. ६ R जयासि. ७ E R तैं. ८ B̊ D K J जहिंसी°. A C K K̊ V Dc Cs P P̊ जिहिं°. We with E R S̊. ९ B̊ C शरै°. १० P तन्दूलम् ।.

विश्वव्यंचा घृतपृंष्ठो भविष्यन्त्सयोंनिर्लोकमुपं याह्येतम्।
वर्षवृंद्धमुपं यच्छ शूर्पं तुषं पलावानपं तद् विंनक्तु ॥ १९ ॥

विश्वऽव्यंचाः। घृतऽपृंष्ठः। भविष्यन्। सऽयोंनिः। लोकम्। उपं। याहि। एतम्।
वर्षऽवृंद्धम्। उपं। यच्छ। शूर्पम्। तुषम्। पलावान्। अपं। तत्। विनक्तु ॥ १९ ॥

त्रयों लोकाः संमिता ब्राह्मणेन द्यौरेवासौ पृथिव्यं१न्तरिक्षम्।
अंशून् गृभीत्वान्वारंभेथामा प्यायन्तां पुनरा यंन्तु शूर्पम् ॥ २० ॥ (१४)

त्रयंः। लोकाः। सम्ऽमिताः। ब्राह्मणेन। द्यौः। एव। असौ। पृथिवी। अन्तरिक्षम्।
अंशून्। गृभीत्वा। अनुऽआरंभेथाम्। आ। प्यायन्ताम्। पुनंः। आ। यन्तु। शूर्पम् ॥ २० ॥ (१४)

पृथग्रूपाणि बहुधा पशूनामेकंरूपो भवसि सं समृंद्ध्या।
एतां त्वचं लोहिनीं तां नुंदस्व ग्रावां शुम्भाति मलग इंव वस्त्रा ॥ २१ ॥

पृथंक्। रूपाणि। बहुऽधा। पशूनाम्। एकंऽरूपः। भवसि। सम्। सम्ऽऋद्ध्या।
एताम्। त्वचंम्। लोहिंनीम्। ताम्। नुदस्व। ग्रावां। शुम्भाति। मलगःऽइंव। वस्त्रा ॥ २१ ॥

पृथिवीं त्वा पृथिव्यामा वेंशयामि तनूः संमानी विकृंता त एषा।
यद्यंद् द्युत्तं लिखितमर्पणेन तेन मा सुस्रोर्ब्रह्मणापि तद् वंपामि ॥ २२ ॥

पृथिवीम्। त्वा। पृथिव्याम्। आ। वेशयामि। तनूः। समानी। विऽकृंता। ते। एषा।
यत्ऽयंत्। द्युत्तम्। लिखितम्। अर्पणेन। तेनं। मा। सुस्रोः। ब्रह्मणा। अपिं। तत्।
वपामि ॥ २२ ॥

जनिंत्रीव प्रति हर्यासि सूनुं सं त्वा दधामि पृथिवीं पृथिव्या।
उखा कुम्भी वेद्यां मा व्यथिष्ठा यज्ञायुधैराज्येनातिषक्ता ॥ २३ ॥

जनिंत्रीऽइव। प्रतिं। हर्यासि। सूनुम्। सम्। त्वा। दधामि। पृथिवीम्। पृथिव्या।
उखा। कुम्भी। वेद्याम्। मा। व्यथिष्ठाः। यज्ञऽआयुधैः। आज्येन। अतिंऽसक्ता ॥ २३ ॥

अग्निः पचंन् रक्षतु त्वा पुरस्तादिन्द्रो रक्षतु दक्षिणतो मरुत्वान्।

---

१ K ॰कउपं. D ॰कमपं. २ K ॰नपिषद्विनक्तु. A E R Cs P P̊ J ॰मपतद्वि॰. We with B̊ C D K̊ S̊ V Cp. ३ A B̊ C D E K R S̊ Dc Cs ॰सौं पृथि॰. P J असौ।. We with K̊ P̊ Cp V. ४ A C E R Dc ३ for १. We with B̊ D K S̊ V Cs. ५ A B̊ C D E K̊ R C ॰भीत्वा अन्वा॰. W with K S̊ V Dc. ६ K प्यायतां. ७ P Cp मा।. ८ A K K̊ उषा.

वरुणस्त्वा दृंहाद्धरुणे प्रतीच्यां उत्तरात् त्वा सोमः सं ददातै ॥ २४ ॥

अग्निः । पचन् । रक्षतु । त्वा । पुरस्तात् । इन्द्रः । रक्षतु । दक्षिणतः । मरुत्वान् ।
वरुणः । त्वा । दृंहात् । धरुणे । प्रतीच्याः । उत्तरात् । त्वा । सोमः । सम् । ददातै ॥ २४ ॥

पूताः पवित्रैः पवन्ते अभ्राद् दिवं च यन्ति पृथिवीं च लोकान् ।
ता जीवला जीवधन्याः प्रतिष्ठाः पात्र आसिक्ताः पर्यग्निरिन्धाम् ॥२५॥

पूताः । पवित्रैः । पवन्ते । अभ्रात् । दिवम् । च । यन्ति । पृथिवीम् । च । लोकान् ।
ताः । जीवलाः । जीवऽधन्याः । प्रतिऽस्थाः । पात्रे । आऽसिक्ताः । परि । अग्निः । इ-न्धाम् ॥ २५ ॥

आ यन्ति दिवः पृथिवीं सचन्ते भूम्याः सचन्ते अध्यन्तरिक्षम् ।
शुद्धाः सतीस्ता उ शुम्भन्त एव ता नः स्वर्गमभि लोकं नयन्तु ॥२६॥

आ । यन्ति । दिवः । पृथिवीम् । सचन्ते । भूम्याः । सचन्ते । अधि । अन्तरिक्षम् ।
शुद्धाः । सतीः । ताः । ऊं इति । शुम्भन्ते । एव । ताः । नः । स्वःऽगम् । अभि । लोकम् । नयन्तु ॥ २६ ॥

उतेव प्रभ्वीरुत संमितास उत शुक्राः शुचयश्चामृतासः ।
ता ओदनं दंपतिभ्यां प्रशिष्टा आपः शिक्षन्तीः पचता सुनाथाः ॥२७॥

उतऽइव । प्रऽभ्वीः । उत । सम्ऽमितासः । उत । शुक्राः । शुचयः । च । अमृतासः ।
ताः । ओदनम् । दंपतिऽभ्याम् । प्रऽशिष्टाः । आपः । शिक्षन्तीः । पचत । सुऽनाथाः ॥ २७ ॥

संख्याता स्तोकाः पृथिवीं सचन्ते प्राणापानैः संमिता ओषधीभिः ।
असंख्याता ओप्यमानाः सुवर्णाः सर्वं व्यापुः शुचयः शुचित्वम् ॥२८॥

सम्ऽख्याताः । स्तोकाः । पृथिवीम् । सचन्ते । प्राणापानैः । सम्ऽमिताः । ओषधीभिः ।

---

१ D दधातै. २ P[2] पचम् ।. ३ K °रिन्धान्. ४ Such is the accent of all our authorities. ५ P शुंभं । ते ।. J शुंभम् । ते ।. P[2] शुंभम् । ते ।. We with Cp. ६ A प्रशिष्टा. ७ None of our authorities have प्रशिष्टा आपः शिक्षन्तीः as appears to be required. Rw. take with the Mss. आपःशिक्षन्तीः as one word. Of our authorities only Cp has आपः । शिक्षन्तीः । which is still wanting in half the truth आपः ।. Defective as it is we follow Cp. ८ K P P[2] J V आपःऽशिक्षन्तीः ।. We with Cp.

असम्ऽख्याताः । आऽउप्यमानाः । सुऽवर्णाः । सर्वम् । वि । आपुः । शुचयः । शुचिऽत्वम् ॥ २८ ॥

उद्योधन्त्यभि वल्गन्ति तप्ताः फेनमस्यन्ति बहुलांश्च बिन्दून् ।
योषेव दृष्ट्वा पतिमृत्वियायैतैस्तण्डुलैर्भवता समापः ॥ २९ ॥

उत् । योधन्ति । अभि । वल्गन्ति । तप्ताः । फेनम् । अस्यन्ति । बहुलान् । च । बिन्दून् ।
योषाऽइव । दृष्ट्वा । पतिम् । ऋत्वियाय । एतैः । तण्डुलैः । भवत । सम् । आपः ॥ २९ ॥

उत्थापय सीदतो बुध्न एनानद्भिरात्मानमभि सं स्पृशन्ताम् ।
अमासि पात्रैरुदकं यदेतन्मितास्तण्डुलाः प्रदिशो यदीमाः ॥ ३० ॥ (१५)

उत् । स्थापय । सीदतः । बुध्ने । एनान् । अत्ऽभिः । आत्मानम् । अभि । सम् । स्पृशन्ताम् ।
अमासि । पात्रैः । उदकम् । यत् । एतत् । मिताः । तण्डुलाः । प्रऽदिशः । यदि । इमाः ॥ ३० ॥ (१५)

प्र यच्छ पर्शुं त्वरया हरौषमहिंसन्त ओषधीर्दान्तु पर्वन् ।
यासां सोमः परि राज्यं बभूवामन्युता नो वीरुधो भवन्तु ॥ ३१ ॥

प्र । यच्छ । पर्शुम् । त्वरय । आ । हर । ओषम् । अहिंसन्तः । ओषधीः । दान्तु । पर्वन् ।
यासाम् । सोमः । परि । राज्यम् । बभूव । अमन्युताः । नः । वीरुधः । भवन्तु ॥ ३१ ॥

नवं बर्हिरोदनाय स्तृणीत प्रियं हृदश्चक्षुषो वल्ग्वस्तु ।
तस्मिन् देवाः सह दैवीर्विशन्त्विमं प्राश्नन्त्वृतुभिर्निषद्य ॥ ३२ ॥

नवम् । बर्हिः । ओदनाय । स्तृणीत । प्रियम् । हृदः । चक्षुषः । वल्गु । अस्तु ।
तस्मिन् । देवाः । सह । दैवीः । विशन्तु । इमम् । प्र । अश्नन्तु । ऋतुऽभिः । निऽसद्य ॥ ३२ ॥

---

१ All our authorities have °मृत्वियायै° (except C which has °मृत्वियायैस्तैस्त,° and K[m] which has °मृत्वियाय एतैस्त° ), the pada-authorities reading ऋत्वियाय । एतैः ।. Rw. have changed the reading to °मृत्वियायै° (ऋत्विया या एतैः &c.). The construction with या ऋत्विया सा योषेव though not incorrect appears un-Vedic, and the reading is opposed to all the Mss. and reciters, and, further, is not necessary In all the passages which have yet been found ऋत्विय may correctly be interpreted as equivalent to 'maithuna' (See XIV. 2. 37. Ṛv. X. 183. 2. TS. 2. 5. 1. 5). २ K त्वर्या, who, however, says त्वरया is a *varietas lectionis*. ३ K K[m] V Dc परिराज्यं. We with A B C D E R S[m] Cs P P[2] J Cp. ४ All our authorities read प्रियां. ५ P J अश्नंतु ।. We with P[2] Cp.

वन॑स्पते स्ती॒र्णमा सी॑द ब॒र्हिर॑ग्निष्टो॒मैः संमि॑तो दे॒वता॑भिः ।
त्वष्ट्रे॑व रू॒पं सुकृ॑तं॒ स्वधि॑त्यै॒ना ए॒हाः परि॒ पात्रे॑ ददृश्राम् ॥ ३३ ॥

वन॑स्पते । स्ती॒र्णम् । आ । सी॒द॒ । ब॒र्हिः । अ॒ग्नि॒ऽस्तो॒मैः । सम्ऽमि॑तः । दे॒वता॑भिः ।
त्वष्ट्रा॑ऽइव । रू॒पम् । सु॒ऽकृ॑तम् । स्व॒ऽधि॑त्या । ए॒ना । ए॒हाः । परि॑ । पात्रे॑ । द॒दृ॒श्राम् ॥ ३३ ॥

ष॒ष्ट्यां श॒रत्सु॑ निधि॒पा अ॒भीच्छा॑त् स्वः॑ प॒क्वेना॒भ्य॑श्नवातै ।
उपै॑नं जीवान् पि॒तर॑श्च पु॒त्रा ए॒तं स्व॒र्गं ग॑मया॒न्त॑म॒ग्नेः ॥ ३४ ॥

ष॒ष्ट्याम् । श॒रत्ऽसु॑ । नि॒धि॒ऽपाः । अ॒भि । इ॒च्छा॒त् । स्वः॑ । प॒क्वेन॑ । अ॒भि । अ॒श्न॒वा॒तै॒ ।
उप॑ । ए॒न॒म् । जी॒वा॒न् । पि॒तरः॑ । च॒ । पु॒त्राः । ए॒तम् । स्वः॒ऽगम् । ग॒म॒य॒ । अन्त॑म् ।
अ॒ग्नेः ॥ ३४ ॥

ध॒र्ता ध्रि॑यस्व ध॒रुणे॑ पृथि॒व्या अच्यु॑तं त्वा दे॒वता॑श्च्यावयन्तु ।
तं त्वा॒ दंप॑ती॒ जीव॑न्तौ जी॒वपु॑त्रा॒वुद् वा॑सयातः॒ पर्य॑ग्नि॒धाना॑त् ॥ ३५ ॥

ध॒र्ता । ध्रि॒य॒स्व॒ । ध॒रुणे॑ । पृ॒थि॒व्याः । अच्यु॑तम् । त्वा॒ । दे॒वताः॑ । च्य॒व॒य॒न्तु॒ ।
तम् । त्वा॒ । दंप॑ती॒ इति॒ दम्ऽप॑ती । जीव॑न्तौ । जी॒वऽपु॑त्रौ । उत् । वा॒स॒या॒तः॒ । परि॑ ।
अ॒ग्नि॒ऽधाना॑त् ॥ ३५ ॥

सर्वा॑न्त्समागा॑ अभि॒जित्य॑ लो॒कान् याव॑न्तः का॒माः सम॑तीतृपस्तान् ।
वि गा॑हेथामा॒यव॑नं च॒ दर्वि॒रेक॑स्मि॒न् पात्रे॒ अध्यु॒द्धरै॑नम् ॥ ३६ ॥

सर्वा॑न् । स॒म्ऽआ॒गाः॑ । अ॒भि॒ऽजित्य॑ । लो॒कान् । याव॑न्तः । का॒माः॑ । सम् । अ॒ती॒तृ॒पः॒ । तान् ।
वि । गा॒हे॒था॒म् । आ॒ऽयव॑नम् । च॒ । द॒र्विः॑ । एक॑स्मिन् । पात्रे॑ । अधि॑ । उत् । ह॒र॒ । ए॒-
न॒म् ॥ ३६ ॥

उप॑ स्तृणीहि प्र॒थय॑ पु॒रस्ता॑द् घृ॒तेन॒ पात्र॑म॒भि घा॑रयै॒तत् ।
वा॒श्रेवो॒स्रा तरु॑णं स्त॒नस्यु॑मि॒मं दे॒वासो॑ अभि॒हिङ्कृ॑णोत ॥ ३७ ॥

उप॑ । स्तृ॒णी॒हि॒ । प्र॒थय॑ । पु॒रस्ता॑त् । घृ॒तेन॑ । पात्र॑म् । अ॒भि । घा॒र॒य॒ । ए॒तत् ।
वा॒श्राऽइ॑व । उ॒स्रा । तरु॑णम् । स्त॒नस्यु॑म् । इ॒मम् । दे॒वा॒सः॒ । अ॒भि॒ऽहि॒ङ्कृ॒णो॒त ॥ ३७ ॥

उपा॑स्तरी॒रक॑रो लो॒कमे॒तमु॒रुः प्र॑थता॒मस॑मः स्व॒र्गः ।

---

१ A K[m] P J सुकृ॑तं॒. We with B[h] C D E K R S[m] V Dc C[s] P[2] Cp. २ P जी॒वा॒न् ।. ३ R °त्रा उद्वा°. S[m] °बुद्वास°. ४ B गा॑येथा°. ५ A B D अ॒भि॒हि°.

तस्मिं छ्रयातै महिषः सुपर्णो देवा एनं देवताभ्यः प्र यच्छान्[1] ॥ ३८ ॥

उप । अस्तरीः । अकरः । लोकम् । एतम् । उरुः । प्रथताम् । असमः । स्वःऽगः[2] ।
तस्मिन् । श्रयातै । महिषः । सुऽपर्णः । देवाः । एनम् । देवताभ्यः । प्र । यच्छान्[1] ॥ ३८ ॥

यद्यज्जाया पचति त्वत् परःपरः पतिर्वा जाये त्वत् तिरः ।
सं तत् सृजेथा सह वां तदस्तु संपादयन्तौ सह लोकमेकम् ॥ ३९ ॥

यत्ऽयत् । जाया । पचति । त्वत् । परःऽपरः । पतिः । वा । जाये । त्वत् । तिरः ।
सम् । तत् । सृजेथाम् । सह । वाम् । तत् । अस्तु । सम्ऽपादयन्तौ । सह । लोकम् । एकम् ॥ ३९ ॥

यावन्तो अस्याः पृथिवीं सचन्ते[3] अस्मत् पुत्राः परि ये संबभूवुः ।
सर्वांस्ताँ[4] उप पात्रे ह्वयेथां नाभिं जानानाः शिशवः समायान् ॥ ४० ॥ (१६)

यावन्तः । अस्याः । पृथिवीम् । सचन्ते[3] । अस्मत् । पुत्राः । परि । ये । सम्ऽबभूवुः ।
सर्वान् । तान् । उप । पात्रे । ह्वयेथाम् । नाभिम् । जानानाः । शिशवः । सम्ऽआयान् ॥ ४० ॥ (१६)

वसोर्या धारा मधुना प्रपीना घृतेन मिश्रा अमृतस्य नाभयः ।
सर्वास्ता[5] अव रुन्धे स्वर्गः षष्ट्यां[6] शरत्सु निधिपा अभीच्छात् ॥ ४१ ॥

वसोः । याः । धाराः । मधुना । प्रऽपीनाः । घृतेन । मिश्राः । अमृतस्य । नाभयः ।
सर्वाः । ताः । अव । रुन्धे । स्वःऽगः । षष्ट्याम्[6] । शरत्ऽसु । निधिऽपाः । अभि । इच्छात् ॥ ४१ ॥

निधिं निधिपा अभ्येनमिँच्छादनीश्वरा[7] अभितः सन्तु ये॒३॒न्ये[8] ।
अस्माभिर्दत्तो निहितः स्वर्गस्त्रिभिः काण्डैस्त्रीन्त्स्वर्गानरुक्षत् ॥ ४२ ॥

निऽधिम् । निधिऽपाः । अभि । एनम् । इच्छात् । अनीश्वराः । अभितः । सन्तु । ये । अन्ये ।
अस्माभिः । दत्तः । निऽहितः[9] । स्वःऽगः[10] । त्रिऽभिः । काण्डैः । त्रीन् । स्वःऽगान् । अरुक्षत् ॥ ४२ ॥

---

१ B C D K P P J यं °त् for °न्. We with A E K R S V Dc Cs. Cp यच्छुन् ।. २ P स्वःऽगाः ।. ३ A B B C D E K R S Dc Cs P J Cp संचन्ते. We with K V P. ४ R E सर्वाँस्तेँ. ५ B D सर्वांस्ता. ६ D K K S Cs J षष्ठ्यां. ७ K K V Dc °मिच्छा°. ८ K १ for ३. Cs has no kampa. ९ P °हिताः ।. १० P स्वःऽगाः ।.

अग्नी रक्षस्तपतु यद् विदेवं क्रव्यात् पिशाच इह मा प्र पास्त ।
नुदामं एनमपं रुध्मो[1] अस्मदादित्या एनमङ्गिरसः सचन्ताम् ॥ ४३ ॥

अग्निः । रक्षः । तपतु । यत् । विऽदेवम् । क्रव्यऽअत् । पिशाचः । इह । मा[2] । प्र । पास्त ।
नुदामः । एनम् । अपं । रुध्मः[3] । अस्मत् । आदित्याः । एनम् । अङ्गिरसः । सचन्ताम् ॥ ४३ ॥

आदित्येभ्यो अङ्गिरोभ्यो मध्विदं घृतेनं मिश्रं प्रतिं वेदयामि ।
शुद्धहस्तौ ब्राह्मणस्यानिहत्यैतं स्वर्गं सुकृतावपीतम्[4] ॥ ४४ ॥

आदित्येभ्यः । अङ्गिरःऽभ्यः । मधु । इदम् । घृतेन । मिश्रम् । प्रति । वेदयामि ।
शुद्धऽहस्तौ । ब्राह्मणस्य[5] । अनिऽहत्य । एतम् । स्वःऽगम् । सुऽकृतौ । अपि । इतम् ॥ ४४ ॥

इदं प्रापमुत्तमं[6] काण्डमस्य[7] यस्माल्लोकात् परमेष्ठी समाप ।
आ सिञ्च सर्पिर्घृतवत् समङ्ग्ध्येष[8] भागो अङ्गिरसो नो अत्र ॥ ४५ ॥

इदम् । प्र । आपम् । उत्ऽतमम् । काण्डम् । अस्य । यस्मात् । लोकात् । परमेऽस्थी ।
समऽआप ।

आ । सिञ्च । सर्पिः । घृतऽवत् । सम् । अङ्ग्धि । एषः । भागः । अङ्गिरसः । नः । अत्र ॥ ४५ ॥

सत्याय च तपसे देवताभ्यो निधिं शेवधिं परि दद्म एतम् ।
मा नो द्यूतेव गान्मा समित्यां मा स्मान्यस्मा उत्सृजता पुरा मेत्[9] ॥४६॥

सत्याय । च । तपसे । देवताभ्यः । निऽधिम् । शेवऽधिम् । परि । दद्मः । एतम् ।
मा । नः । द्यूते[10] । अव । गात् । मा । सम्ऽइत्याम् । मा । स्म । अन्यस्मै । उत् । सृजत ।
पुरा । मेत् ॥ ४६ ॥

अहं पचाम्यहं[11] ददामि ममेदु कर्मन् करुणेधि जाया ।
कौमारो लोको अजनिष्ट पुत्रो[12] ३न्वारभेथां वयं उत्तरावत ॥ ४७ ॥

अहम् । पचामि । अहम् । ददामि । मम । इत् । ऊं इति । कर्मन् । करुणे । अधि । जाया ।
कौमारः । लोकः । अजनिष्ट[13] । पुत्रः । अनुऽआरभेथाम् । वयः । उत्तरऽवत् ॥ ४७ ॥

---

१ D रुंध्मो. We with A B B^h C E K K^m R S^m V Dc Cs P P^2 J Cp. २ P मा।. ३ P J रुध्मः।. ४ B corrects पि to प. ५ P ब्रह्मणस्य।. ६ E प्रापº. ७ B काण्डमस्य. ८ B^h दध्म. ९ E मेत्. B^h वत्. A D R S^m Cs P J मंत्. We with B C K K^m V Dc P^2 Cp. १० P द्युते।. ११ K वंदामि. १२ K^m S १ for ३. १३ P ºनिष्ठ।.

न किल्बिषमत्र नाधारो अस्ति न यन्मित्रैः समममान एति।
अनूनं पात्रं निहितं न एतत् पक्तारं पक्वः पुनरा विशाति ॥ ४८ ॥

न। किल्बिषम्। अत्र। न। आऽधारः। अस्ति। न। यत्। मित्रैः। सम्ऽअममानः। एति।
अनूनम्। पात्रम्। निऽहितम्। नः। एतत्। पक्तारम्। पक्वः। पुनः। आ। विशाति ॥ ४८ ॥

प्रियं प्रियाणां कृणवाम तमस्ते यन्तु यतमे द्विषन्ति।
धेनुरनड्वान् वयोवय आयदेव पौरुषेयमप मृत्युं नुदन्तु ॥ ४९ ॥

प्रियम्। प्रियाणाम्। कृणवाम। तमः। ते। यन्तु। यतमे। द्विषन्ति।
धेनुः। अनड्वान्। वयःऽवयः। आऽयत्। एव। पौरुषेयम्। अप। मृत्युम्। नुदन्तु ॥ ४९ ॥

समग्नयो विदुरन्यो अन्यं य ओषधीः सचते यश्च सिन्धून्।
यावन्तो देवा दिव्याऽतपन्ति हिरण्यं ज्योतिः पचतो बभूव ॥ ५० ॥ (१७)

सम्। अग्नयः। विदुः। अन्यः। अन्यम्। यः। ओषधीः। सचते। यः। च। सिन्धून्।
यावन्तः। देवाः। दिवि। आऽतपन्ति। हिरण्यम्। ज्योतिः। पचतः। बभूव ॥ ५० ॥ (१७)

एषा त्वचां पुरुषे सं बभूवानग्नाः सर्वे पशवो ये अन्ये।
क्षत्रेणात्मानं परि धापयाथोमोतं वासो मुखमोदनस्य ॥ ५१ ॥

एषा। त्वचाम्। पुरुषे। सम्। बभूव। अनग्नाः। सर्वे। पशवः। ये। अन्ये।
क्षत्रेण। आत्मानम्। परि। धापयाथः। अमाऽउतम्। वासः। मुखम्। ओदनस्य ॥ ५१ ॥

यदक्षेषु वदा यत् समित्यां यद्वा वदा अनृतं वित्तकाम्या।
समानं तन्तुमभि संवसानौ तस्मिन्त्सर्वं शमलं सादयाथः ॥ ५२ ॥

यत्। अक्षेषु। वदाः। यत्। सम्ऽइत्याम्। यत्। वा। वदाः। अनृतम्। वित्तऽकाम्या।
समानम्। तन्तुम्। अभि। सम्ऽवसानौ। तस्मिन्। सर्वम्। शमलम्। सादयाथः ॥ ५२ ॥

---

१ D संनममान. B[h] R सनममान. E सममान. Cs संममान. We with A C K K[r] S[m] V Dc P P[2] J Cp. २ B B[h] Cs निहितं. ३ P[2] किल्विषम्।. ४ P कृण्वाम।. ५ A B B[h] D E R S[m] V Cs P[2] Cp विदु°. We with C K[m] P J. Dc विदु° changed to विदु°. ६ A S[11] सचंते. ७ Dc एषां corrected to एषा. ८ S[m] त्वचा. ९ R यदक्षेषु. १० B[h] °काम्यां. ११ B सादयेथाः.

वर्षं वनुष्वापि गच्छ देवांस्त्वचो धूमं पर्युत्पातयासि ।
विश्वव्यचा घृतपृष्ठो भविष्यन्त्सयोनिर्लोकमुप याह्येतम् ॥ ५३ ॥

वर्षम् । वनुष्व । अपि । गच्छ । देवान् । त्वचः । धूमम् । परि । उत् । पातयासि ।
विश्वऽव्यचाः । घृतऽपृष्ठः । भविष्यन् । सऽयोनिः । लोकम् । उप । याहि । एतम् ॥ ५३ ॥

तन्वं स्वर्गो बहुधा वि चक्रे यथा विद आत्मन्नन्यवर्णाम् ।
अपाजैत् कृष्णां रुशतीं पुनानो या लोहिनी तां ते अग्नौ जुहोमि ॥ ५४ ॥

तन्वम् । स्वःऽगः । बहुऽधा । वि । चक्रे । यथा । विदे । आत्मन् । अन्यऽवर्णाम् ।
अप । अजैत् । कृष्णाम् । रुशतीम् । पुनानः । या । लोहिनी । ताम् । ते । अग्नौ । जुहोमि ॥ ५४ ॥

प्राच्यै त्वा दिशे३ऽग्नयेऽधिपतयेऽसिताय रक्षित्र आदित्यायेषुमते ।
एतं परि दद्मस्तं नो गोपायतास्माकमैतोः ।
दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि णो ददात्वथ पक्वेन सह सं भवेम ॥ ५५ ॥

प्राच्यै । त्वा । दिशे । अग्नये । अधिऽपतये । असिताय । रक्षित्रे । आदित्याय । इषुऽमते ।
एतम् । परि । दद्मः । तम् । नः । गोपायत । आ । अस्माकम् । आऽएतोः ।
दिष्टम् । नः । अत्र । जरसे । नि । नेषत् । जरा । मृत्यवे । परि । नः । ददातु । अथ । पक्वेन । सह । सम् । भवेम ॥ ५५ ॥

दक्षिणायै त्वा दिश इन्द्रायाधिपतये तिरश्चिराजये रक्षित्रे यमायेषुमते ।
एतं०।० ॥ ५६ ॥

दक्षिणायै । त्वा । दिशे । इन्द्राय । अधिऽपतये । तिरश्चिऽराजये । रक्षित्रे । यमाय । इषुऽमते ॥० ॥ ५६ ॥

प्रतीच्यै त्वा दिशे वरुणायाधिपतये पृदाकवे रक्षित्रेऽन्नायेषुमते ।
एतं०।० ॥ ५७ ॥

प्रतीच्यै । त्वा । दिशे । वरुणाय । अधिऽपतये । पृदाकवे । रक्षित्रे । अन्नाय । इषुऽमते ॥० ॥५७॥

---

१ B पातयामि. R P P[2] J °पातयामसि. We with A B[m] C D E K K[m] S[m] V Dc Cs Cp.
२ S[m] °निर्लोकमुप. ३ B रुषती.

उदीच्यै त्वा दिशे सोमायाधिपतये स्वजाय रक्षित्रेशन्या इषुमत्यै ।
एतं०।० ॥ ५८ ॥

उदीच्यै । त्वा । दिशे । सोमाय । अधिऽपतये । स्वजाय । रक्षित्रे । अशन्यै । इषुऽमत्यै ॥० ॥५८॥

ध्रुवायै त्वा दिशे विष्णवेधिपतये कल्माषग्रीवाय रक्षित्र ओषधीभ्य इषुमतीभ्यः । एतं०।० ॥ ५९ ॥

ध्रुवायै । त्वा । दिशे । विष्णवे । अधिऽपतये । कल्माषऽग्रीवाय । रक्षित्रे । ओषधीभ्यः । इषुऽमतीभ्यः ॥० ॥ ५९ ॥

ऊर्ध्वायै त्वा दिशे बृहस्पतयेधिपतये श्वित्राय रक्षित्रे वर्षायेषुमते ।
एतं परि दद्मस्तं नो गोपायतास्माकमैतोः ।
दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि णो ददात्वथ पक्वेन सह सं भवेम ॥ ६० ॥(१८)

ऊर्ध्वायै । त्वा । दिशे । बृहस्पतये । अधिऽपतये । श्वित्राय । रक्षित्रे । वर्षाय । इषुऽमते । एतम् । परि । दद्मः । तम् । नः । गोपायत । आ । अस्माकम् । आऽएतोः । दिष्टम् । नः । अत्र । जरसे । नि । नेषत् । जरा । मृत्यवे । परि । नः । ददातु । अथ । पक्वेन । सह । सम् । भवेम ॥ ६० ॥ (१८)

तृतीयेनुवाके प्रथमं सूक्तम् ॥

इति तृतीयोनुवाकः ॥

वशाविषयकं सूक्तम् एतत् । वशा गौर्या गर्भं न गृह्णातीति दारिलः (कौ° ५.८) । वशा वन्ध्या गौरिति सायणः (ऋ° २.७.५) । वशा स्वभाववन्ध्या गौरिति स एव (ऋ° १० ९१.१४) ।

यस्य गृहे वशा जाता तस्य गृहे 'अज्ञातगदा सती' अर्थाद् अज्ञातवशात्वरूपवैकल्या सती आ वर्षत्रयाद् रक्षितव्या । तदनन्तरम् असंग्राह्या भवति । वशा गौर्देवानां विशेषेण प्रियं हविर्भवति । तस्माद्देवानामर्थे ता याचद्भ्यो ब्राह्मणेभ्यस्तत्पतिर्दद्यादेव । तथा कृते प्रजादिवृद्धिर्भवति न च कृते बह्व्य आपदः सजायन्ते । तदेव आपद्ग्रसन तस्या अदत्तायाः कस्माद्दद्यात् कीदृश भवतीत्याह । अन्यापि कथं विपत्तिर्भवतीति च । याचद्भ्यो ब्राह्मणेभ्योऽदत्ता वशा ब्रह्मोपद्रवादि पापं जनयति । यदा वशां ब्राह्मणा याचन्ते देवा एव तद् याचन्तीति मन्तव्यम् वशा हि देवाना भागो भवति । वशा दत्ता सती सर्वान् दातुः कामान् दुग्धे । यो वशां वेहत मन्यमान' स्वयमेव हत्वा पचेत्तस्य हानिर्भवति । वशा हि ब्राह्मणेभ्य आत्मान दीयमानां तैश्च हता सती देवेभ्यो हवीरूपेण अर्प्यमाणाम् इच्छति । तस्माद् यदि हुतां वा अहुतां वा यो वशापतिस्तां स्वगृह एव पचते सोधःपातम् आप्य नरकं गच्छतीत्याह ॥

वशाशमनप्रकारः कौशिके [५.८,९] प्रपञ्चितः ॥

१ P कल्फा° ।. २ $\overset{m}{K}$ V Dc $\overset{2}{P}$ श्वित्राय.

वशादानस्य प्रकारस्तु "ददामीति वशाम् उदपात्रेण सपातवता संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद् दाता वाच्यमानः" इति कौशिके [८.७] दर्शितः ॥

ददामीत्येव ब्रूयादनु[1] चैनामभुत्सत ।
वशां ब्रह्मभ्यो याचद्भ्यस्तत् प्रजावदपत्यवत् ॥ १ ॥

ददामि । इति । एव । ब्रूयात् । अनु । च । एनाम् । अभुत्सत ।
वशाम् । ब्रह्मऽभ्यः । याचत्ऽभ्यः । तत् । प्रजाऽवत् । अपत्यऽवत् ॥ १ ॥

प्रजया स वि क्रीणीते पशुभिश्चोप दस्यति ।
य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ॥ २ ॥

प्रऽजया । सः । वि । क्रीणीते । पशुऽभिः । च । उप । दस्यति ।
यः । आर्षेयेभ्यः । याचत्ऽभ्यः । देवानाम् । गाम् । न । दित्सति ॥ २ ॥

कूटयास्य सं शीर्यन्ते श्लोणया काटमर्दति ।
बण्डया दह्यन्ते गृहाः काणया दीयते स्वम् ॥ ३ ॥

कूटया । अस्य । सम् । शीर्यन्ते । श्लोणया । काटम् । अर्दति ।
बण्डया । दह्यन्ते । गृहाः । काणया । दीयते । स्वम् ॥ ३ ॥

विलोहितो अधिष्ठानाच्छक्नो विन्दति गोपतिम् ।
तथा वशायाः संविद्यं दुरदभ्ना ह्यु[2]च्यसे ॥ ४ ॥

विऽलोहितः । अधिऽस्थानात् । शक्नः । विन्दति । गोऽपतिम् ।
तथा । वशायाः । सम्ऽविद्यम् । दुरदभ्ना । हि । उच्यसे ॥ ४ ॥

पदोरस्या अधिष्ठानाद् विक्लिन्दुर्नाम विन्दति ।
अनामनात्[3] सं शीर्यन्ते या मुखेनोपजिघ्रति ॥ ५ ॥

पदोः । अस्याः । अधिऽस्थानात् । विऽक्लिन्दुः । नाम । विन्दति ।
अनामनात् । सम् । शीर्यन्ते । याः । मुखेन । उपऽजिघ्रति ॥ ५ ॥

यो अस्याः कर्णावास्कुनोत्या स देवेषु वृश्चते ।
[4]लक्ष्म कुर्व इति मन्यते कनीयः कृणुते स्वम् ॥ ६ ॥

---

१ B °यादनु. २ A K K^m ह्यूच्यसे. B^h V ह्यु१च्यसे. C S^m C_s ह्यूच्यसे. D Dc ह्यू१च्यसे. E ह्यु३च्यसे. R ह्युच्यसे. ३ B °मनान्सं. ४ B यक्ष्म.

यः । अस्याः । कर्णौ । आऽस्कुनोति । आ । सः । देवेषु । वृश्चते ।
लक्ष्म । कुर्वे । इति । मन्यते । कनीयः । कृणुते । स्वम् ॥ ६ ॥

यदस्याः कस्मै चिद् भोगाय बालान् कश्चित् प्रकृन्तति ।
ततः किशोरा म्रियन्ते वत्सांश्च घातुको वृकः ॥ ७ ॥

यत् । अस्याः । कस्मै । चित् । भोगाय । बालान् । कः । चित् । प्रऽकृन्तति ।
ततः । किशोराः । म्रियन्ते । वत्सान् । च । घातुकः । वृकः ॥ ७ ॥

यद[1]स्या गोपतौ सत्या लोम ध्वाङ्क्षो अजीहिडत् ।
ततः कुमारा म्रियन्ते यक्ष्मो विन्दत्यनामनात् ॥ ८ ॥

यत् । अस्याः । गोऽपतौ । सत्याः । लोम । ध्वाङ्क्षः । अजीहिडत् ।
ततः । कुमाराः । म्रियन्ते । यक्ष्मः । विन्दति । अनामनात् ॥ ८ ॥

यदस्याः पल्पू[2]लनं श[3]कृद् दासी समस्यति ।
ततोपरूपं जायते तस्माद्व्येष्यदेनसः ॥ ९ ॥

यत् । अस्याः । पल्[2]पूलनम् । शकृत् । दासी । सम्ऽअस्यति ।
ततः । अपऽरूपम् । जायते । तस्मात् । अविऽएष्यत् । एनसः ॥ ९ ॥

जायमानाभि जायते देवान्त्सब्राह्मणान् वशा ।
तस्माद् ब्रह्मभ्यो देयैषा तदाहुः स्वस्य गोपनम् ॥ १० ॥ (१९)

जायमाना । अभि । जायते । देवान् । सऽब्राह्मणान् । वशा ।
तस्मात् । ब्रह्मऽभ्यः । देया । एषा । तत् । आहुः । स्वस्य । गो[4]पनम् ॥ १० ॥ (१९)

य एनां वनिमायन्ति तेषां देवकृता वशा ।
ब्रह्मज्येयं तदब्रुवन् य एनां निप्रियायते ॥ ११ ॥

ये । एनाम् । वनिम् । आऽयन्ति । तेषाम् । देवऽकृता । वशा ।
ब्रह्मऽज्येयम् । तत् । अब्रुवन् । यः । एनाम्[5] । निऽप्रियय[6]ते ॥ ११ ॥

य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ।

---

१ B योऽस्या°. २ K V पल्यू°. We with Dc Cs P Cp. The other MSS. doubtful between °ल्यू °and °ल्पू°. ३ R सकृ°. ४ P P² J Cp गोऽपनम् ।. ५ J P² एनान् ।. ६ So P P² J Cp.

आ स देवेषु वृश्चते ब्राह्मणानां च मन्यवे ॥ १२ ॥

यः । आर्षेयेभ्यः । याचत्ऽभ्यः । देवानाम् । गाम् । न । दित्सति ।
आ । सः । देवेषु । वृश्चते । ब्राह्मणानाम् । च । मन्यवे ॥ १२ ॥

यो अस्य स्याद् वशाभोगो अन्यामिच्छेत तर्हि सः ।
हिंस्ते अदत्ता पुरुषं याचितां च न दित्सति ॥ १३ ॥

यः । अस्य । स्यात् । वशाऽभोगः । अन्याम् । इच्छेत । तर्हि । सः ।
हिंस्ते । अदत्ता । पुरुषम् । याचिताम् । च । न । दित्सति ॥ १३ ॥

यथा शेवधिर्निहितो ब्राह्मणानां तथा वशा ।
तामेतदच्छायन्ति यस्मिन् कस्मिंश्च जायते ॥ १४ ॥

यथा । शेवऽधिः । निऽहितः । ब्राह्मणानाम् । तथा । वशा ।
ताम् । एतत् । अच्छऽआयन्ति । यस्मिन् । कस्मिन् । च । जायते ॥ १४ ॥

स्वमेतदच्छायन्ति यद् वशां ब्राह्मणा अभि ।
यथैनानन्यस्मिन् जिनीयादेवास्या निरोधनम् ॥ १५ ॥

स्वम् । एतत् । अच्छऽआयन्ति । यत् । वशाम् । ब्राह्मणाः । अभि ।
यथा । एनान् । अन्यस्मिन् । जिनीयात् । एव । अस्याः । निऽरोधनम् ॥ १५ ॥

चरेदेवा त्रैहायणादविज्ञातगदा सती ।
वशां च विद्यान्नारद ब्राह्मणास्तर्ह्येष्याः ॥ १६ ॥

चरेत् । एव । आ । त्रैहायनात् । अविज्ञातऽगदा । सती ।
वशाम् । च । विद्यात् । नारद । ब्राह्मणाः । तर्हि । एष्याः ॥ १६ ॥

य एनामवशामाह देवानां निहितं निधिम् ।
उभौ तस्मै भवाशर्वौ परिक्रम्येषुमस्यतः ॥ १७ ॥

यः । एनाम् । अवशाम् । आह । देवानाम् । निऽहितम् । निऽधिम् ।
उभौ । तस्मै । भवाशर्वौ । परिऽक्रम्य । इषुम् । अस्यतः ॥ १७ ॥

---

१ P मृत्यवे । We with P J Cp. २ B दित्सते. ३ P स्यात् । We with P J Cp. ४ P अच्छुऽयन्ति । We with P J Cp. ५ A B B C D E R S C P J Cp ब्राह्मणा । We with K K V Dc P. ६ P स्वाम् ।

योऽअस्या ऊधो न वेदाथो अस्या स्तनानुत ।
उभयेनैवास्मै दुहे दातुं चेदशंकद् वशाम् ॥ १८ ॥

यः । अस्याः । ऊर्धः । न । वेद । अथो इति । अस्याः । स्तनान् । उत ।
उभयेन । एव । अस्मै । दुहे । दातुम् । च । इत् । अशंकत् । वशाम् ॥ १८ ॥

दुरदभ्नैनमा शये याचितां च न दित्सति ।
नास्मै कामाः समृध्यन्ते यामदत्त्वा चिकीर्षति ॥ १९ ॥

दुःऽअदभ्ना । एनम् । आ । शये । याचिताम् । च । न । दित्सति ।
न । अस्मै । कामाः । सम् । ऋध्यन्ते । याम् । अदत्त्वा । चिकीर्षति ॥ १९ ॥

देवा वशामयाचन् मुखं कृत्वा ब्राह्मणम् ।
तेषां सर्वेषामददद्धेडं न्येति मानुषः ॥ २० ॥ (२०)

देवाः । वशाम् । अयाचन् । मुखम् । कृत्वा । ब्राह्मणम् ।
तेषाम् । सर्वेषाम् । अददत् । हेडम् । नि । एति । मानुषः ॥ २० ॥ (२०)

हेडं पशूनां न्येति ब्राह्मणेभ्योऽददद् वशाम् ।
देवानां निहितं भागं मर्त्यश्चेन्निप्रियायते ॥ २१ ॥

हेडम् । पशूनाम् । नि । एति । ब्राह्मणेभ्यः । अददत् । वशाम् ।
देवानाम् । निऽहितम् । भागम् । मर्त्यः । च । इत् । निऽप्रियायते ॥ २१ ॥

यदन्ये शतं याचेयुर्ब्राह्मणा गोपतिं वशाम् ।
अथैनां देवा अब्रुवन्नेवं ह विदुषो वशा ॥ २२ ॥

यत् । अन्ये । शतम् । याचेयुः । ब्राह्मणाः । गोऽपतिम् । वशाम् ।
अथ । एनाम् । देवाः । अब्रुवन् । एवम् । ह । विदुषः । वशा ॥ २२ ॥

---

१ C °कद्वशा. २ K S̈ V °दद्धेडं. ३ B B̈ C E K̈ न्येति for न्येति. We with A D K S̈ V Dc Cs. ४ P अयाचन् ।. ५ All our authorities except Cp have °भ्योददद्व-शाम् (P P̈ J K V reading अददत् in the pada-pâṭha). We with Cp. Rw have already made the correction. ६ P मर्त्यः ।. ७ A C E K R S̈ P̈ J Cp अथैतां. We with B̈ D K̈ V Dc Cs. ८ P एताम् ।. P̈ J Cp एताम् ।.

य एवं विदुषेऽदत्त्वाथान्येभ्यो ददद् वशाम् ।
दुर्गा तस्मा अधिष्ठाने पृथिवी सहदेवता ॥ २३ ॥

यः । एवम् । विदुषे । अदत्त्वा । अथ । अन्येभ्यः । ददत् । वशाम् ।
दुःऽगा । तस्मै । अधिऽस्थाने । पृथिवी । सहऽदेवता ॥ २३ ॥

देवा वशामयाचन् यस्मिन्नग्रे अजायत ।
तामेतां विद्यान्नारदः सह देवैरुदाजत ॥ २४ ॥

देवाः । वशाम् । अयाचन् । यस्मिन् । अग्रे । अजायत ।
ताम् । एताम् । विद्यात् । नारदः । सह । देवैः । उत् । आजत ॥ २४ ॥

अनपत्यमल्पपशुं वशा कृणोति पूरुषम् ।
ब्राह्मणैश्च याचितामथैनां निप्रियायते ॥ २५ ॥

अनपत्यम् । अल्पऽपशुम् । वशा । कृणोति । पुरुषम् ।
ब्राह्मणैः । च । याचिताम् । अथ । एनाम् । निऽप्रियायते ॥ २५ ॥

अग्नीषोमाभ्यां कामाय मित्राय वरुणाय च ।
तेभ्यो याचन्ति ब्राह्मणास्तेष्वा वृश्चतेऽददत् ॥ २६ ॥

अग्नीषोमाभ्याम् । कामाय । मित्राय । वरुणाय । च ।
तेभ्यः । याचन्ति । ब्राह्मणाः । तेषु । आ । वृश्चते । अददत् ॥ २६ ॥

यावदस्या गोपतिर्नोपशृणुयादृचः स्वयम् ।
चरेदस्य तावद् गोषु नास्य श्रुत्वा गृहे वसेत् ॥ २७ ॥

यावत् । अस्याः । गोऽपतिः । न । उपऽशृणुयात् । ऋचः । स्वयम् ।
चरेत् । अस्य । तावत् । गोषु । न । अस्य । श्रुत्वा । गृहे । वसेत् ॥ २७ ॥

---

१ A B B[h] D E Cs विदुषे°. We with C K K[m] R S[m] V Dc. २ All our Saṁhitâ authorities have °भ्योददद्वशाम्. P P[2] J Cp ददत् ।. Rw °भ्योऽददद्वशाम्. Our correction is necessary. ३ Dc विद्यान्नारदः changed to विद्यान्नारदः. P P[2] नारदः ।. We with A B B[h] C D E K K[m] R S[m] Cs J Cp. ४ P यातिताम् ।. ५ R S[m] °णास्तेष्वा. ६ A B[h] C E R P P[2] J वशेत्. We with D K K[m] S[m] V Dc Cs Cp.

यो अस्या[1] ऋचं[2] उपश्रुत्याथ गोष्वचीचरत्[3] ।
आयुश्च तस्य भूतिं च देवा वृश्चन्ति[4] हीडिताः ॥ २८ ॥

यः । अस्याः । ऋचः । उपऽश्रुत्य । अथ । गोषु । अचीचरत्[3] ।
आयुः । च । तस्य । भूतिम् । च । देवाः । वृश्चन्ति । हीडिताः ॥ २८ ॥

वशा चरन्ती बहुधा देवानां निहितो निधिः ।
आविष्कृणुष्व[5] रूपाणि यदा स्थाम जिघांसति ॥ २९ ॥

वशा । चरन्ती । बहुऽधा । देवानाम् । निऽहितः । निऽधिः ।
आविः । कृणुष्व[6] । रूपाणि । यदा । स्थाम । जिघांसति ॥ २९ ॥

आविरात्मानं कृणुते यदा स्थाम जिघांसति ।
अथो ह ब्रह्मभ्यो वशा याञ्च्याय[7] कृणुते मनः ॥ ३० ॥ (२१)

आविः । आत्मानम् । कृणुते । यदा । स्थाम । जिघांसति ।
अथो इति । ह । ब्रह्मऽभ्यः । वशा । याच्ञ्याय । कृणुते । मनः ॥ ३० ॥ (२१)

मनसा सं कल्पयति तद् देवाँ अपि गच्छति ।
ततो ह ब्रह्माणो[10] वशामुपप्रयन्ति याचितुम् ॥ ३१ ॥

मनसा । सम् । कल्पयति । तत् । देवान् । अपि । गच्छति ।
ततः । ह । ब्रह्माणः । वशाम् । उपऽप्रयन्ति । याचितुम् ॥ ३१ ॥

स्वधाकारेण पितृभ्यो यज्ञेन देवताभ्यः ।
दानेन राजन्यो वशाया मातुर्हेडं न गच्छति ॥ ३२ ॥

स्वधाऽकारेण । पितृऽभ्यः । यज्ञेन । देवताभ्यः ।
दानेन । राजन्यः । वशायाः । मातुः । हेडम् । न । गच्छति ॥ ३२ ॥

---

१ A D S^m अस्या ३. २ K ऋषं. ३ All our authorities have गोष्वचीचरत्, the pada-authorities having अचीचरत् ।. Rw's correction appears necessary. ४ A C D R Cs P J Cp वृश्चंति. We with B B^h E K K^m S^m V Dc P^2. ५ B^h E R V Dc आविः कृणुष्व ।. We with A C D K K^m S^m Cs ६ P P^2 J कृणुते ।. We with Cp. ७ B K K^m याच्याय. A B^h E R P^2 V याञ्ज्याय. D Cs याच्ञाय. Cp याञ्चाय. We with C Dc S^m P J. ८ P स्याम ।. ९ E R °वँ. १० B K K^m ब्रह्मणो.

वशा माता राजन्यस्य तथा संभूतमग्रशः ।
तस्या आहुरनर्पणं यद् ब्रह्मभ्यः प्रदीयते ॥ ३३ ॥
वशा । माता । राजन्यस्य । तथा । सम्ऽभूतम् । अग्रऽशः ।
तस्याः । आहुः । अनर्पणम् । यत् । ब्रह्मऽभ्यः । प्रऽदीयते ॥ ३३ ॥

यथाज्यं प्रगृहीतमालुम्पेत् स्रुचो अग्नये[1] ।
एवा ह ब्रह्मभ्यो वशामग्नय आ वृश्चतेददत्[2] ॥ ३४ ॥
यथा । आज्यम् । प्रऽगृहीतम् । आऽलुम्पेत् । स्रुचः[3] । अग्नये ।
एव । ह । ब्रह्मऽभ्यः । वशाम् । अग्नये । आ । वृश्चते । अददत् ॥ ३४ ॥

पुरोडाशवत्सा सुदुघा लोके[4]स्मा उप तिष्ठति ।
सास्मै सर्वान् कामान् वशा प्रददुषे दुहे ॥ ३५ ॥
पुरोडाशऽवत्सा । सुऽदुघा । लोके । अस्मै । उप । तिष्ठति ।
सा । अस्मै[5] । सर्वान् । कामान् । वशा । प्रऽददुषे । दुहे ॥ ३५ ॥

सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे ।
अथाहुर्नारकं लोकं निरुन्धानस्य याचिताम् ॥ ३६ ॥
सर्वान् । कामान् । यमऽराज्ये । वशा । प्रऽददुषे । दुहे ।
अथ । आहुः । नरकम्[6] । लोकम् । निऽरुन्धानस्य । याचिताम् ॥ ३६ ॥

प्रवीयमाना चरति क्रुद्धा गोपतये वशा ।
वेहतं मा मन्यमानो मृत्योः पाशेषु बध्यताम् ॥ ३७ ॥
प्रऽवीयमाना । चरति । क्रुद्धा । गोऽपतये । वशा ।
वेहतम् । मा । मन्यमानः । मृत्योः । पाशेषु । बध्यताम् ॥ ३७ ॥

यो वेहतं मन्यमानो[8]मा च पचते वशाम् ।
अप्यस्य पुत्रान् पौत्रांश्च याचयते बृहस्पतिः ॥ ३८ ॥
यः । वेहतम् । मन्यमानः । अमा । च । पचते । वशाम् ।
अपि । अस्य । पुत्रान् । पौत्रान् । च । याचयते । बृहस्पतिः ॥ ३८ ॥

---

१ A R प्रगृहीत°. २ B °ददत्. ३ P स्रुच ।. ४ V Dc लोके. ५ P असै ।. ६ P P[2] J Cp. See *Chaturâdhyâyî* 4. 90. ७ P °रुधानस्य ।. ८ R मन्यमानो.

महदेषाव तपति चरन्ती गोषु गौरपि ।
अथो ह गोपतये वशाददुषे विषं दुहे ॥ ३९ ॥

महत् । एषा । अव । तपति । चरन्ती । गोषु । गौः । अपि ।
अथो इति । ह । गोऽपतये । वशा । अददुषे । विषम् । दुहे ॥ ३९ ॥

प्रियं पशूनां भवति यद् ब्रह्मभ्यः प्रदीयते ।
अथो वशायास्तत् प्रियं यद् देवत्रा हविः स्यात्[1] ॥ ४० ॥ (२२)

प्रियम् । पशूनाम् । भवति । यत् । ब्रह्मऽभ्यः । प्रऽदीयते ।
अथो इति । वशायाः । तत् । प्रियम् । यत् । देवऽत्रा । हविः । स्यात् ॥ ४० ॥ (२२)

या वशा उदकल्पयन् देवा यज्ञादुदेत्य ।
तासां विलिप्त्यं[2] भीमामुदाकुरुत नारदः ॥ ४१ ॥

याः । वशाः । उत्ऽअकल्पयन् । देवाः । यज्ञात् । उत्ऽएत्य ।
तासाम् । विऽलिप्त्यम्[2] । भीमाम् । उत्ऽआकुरुत । नारदः ॥ ४१ ॥

तां देवा अमीमांसन्त वशेया३मवशेति[3] ।
तामब्रवीन्नारद एषा वशानां वशतमेति ॥ ४२ ॥

ताम् । देवाः । अमीमांसन्त । वशा । इया३म् । अवशा३[4] । इति ।
ताम् । अब्रवीत् । नारदः । एषा । वशानाम् । वशऽतमा । इति ॥ ४२ ॥

कति नु वशा नारद यास्त्वं[5] वेत्थ मनुष्यजाः ।
तास्त्वां पृच्छामि विद्वांसं कस्या नाश्नीयादब्राह्मणः ॥ ४३ ॥

कति । नु । वशाः । नारद । याः । त्वम् । वेत्थ[6] । मनुष्यऽजाः ।
ताः । त्वा । पृच्छामि । विद्वांसम् । कस्याः । न । अश्नीयात् । अब्राह्मणः ॥ ४३ ॥

विलिप्त्या बृहस्पते या च सूतवशा वशा ।
तस्या नाश्नीयादब्राह्मणो य आशंसेत भूत्याम् ॥ ४४ ॥

---

१ B B^h D Cs P Cp स्यात्. २ D K K^m S^m V Cs विलिप्तीं. A Dc °प्तीं changed from °प्त्यं. Cp विलिप्तीं changed to विलिप्त्यं. We with B^h C E R P P^2 J. ३ So all our Saṁhitâ authorities. Also Rw. Against Pâṇini VIII. 2. 97, see *Chaturâdhyâyî* 1. 97. ४ So all our pada-authorities. See foregoing note. ५ B यास्तं. ६ P वेत्थ ।.

विऽलिप्त्याः । बृहस्पते । या । च । सूतऽवंशा । वशा ।
तस्याः । न । अश्नीयात् । अब्राह्मणः । यः । आऽशंसेत । भूत्याम् ॥ ४४ ॥

नमस्ते अस्तु नारदानुष्ठु विदुषे वशा ।
कतमासां भीमतमा यामदत्त्वा पराभवेत् ॥ ४५ ॥

नमः । ते । अस्तु । नारद । अनुष्ठु । विदुषे । वशा ।
कतमा । आसाम् । भीमऽतमा । याम् । अदत्त्वा । पराऽभवेत् ॥ ४५ ॥

विलिप्ती या बृहस्पतेथो सूतवंशा वशा ।
तस्या नाश्नीयादब्राह्मणो य आशंसेत भूत्याम् ॥ ४६ ॥

विऽलिप्ती । या । बृहस्पते । अथो इति । सूतऽवंशा । वशा ।
तस्याः । न । अश्नीयात् । अब्राह्मणः । यः । आऽशंसेत । भूत्याम् ॥ ४६ ॥

त्रीणि वै वशाजातानि विलिप्ती सूतवंशा वशा ।
ताः प्र यच्छेद् ब्रह्मभ्यः सोनाव्रस्कः प्रजापतौ ॥ ४७ ॥

त्रीणि । वै । वशाऽजातानि । विऽलिप्ती । सूतऽवंशा । वशा ।
ताः । प्र । यच्छेत् । ब्रह्मऽभ्यः । सः । अनाव्रस्कः । प्रजाऽपतौ ॥ ४७ ॥

एतद् वो ब्राह्मणा हविरिति मन्वीत याचितः ।
वशां चेदेनं याचेयुर्या भीमाददुषो गृहे ॥ ४८ ॥

एतत् । वः । ब्राह्मणाः । हविः । इति । मन्वीत । याचितः ।
वशाम् । च । इत् । एनम् । याचेयुः । या । भीमा । अददुषः । गृहे ॥ ४८ ॥

देवा वशां पर्यवदन् न नोदादिति हीडिताः ।
एताभिर्ऋग्भिर्भेदं तस्माद् वै स पराभवत् ॥ ४९ ॥

देवाः । वशाम् । परि । अवदन् । न । नः । अदात् । इति । हीडिताः ।
एताभिः । ऋक्ऽभिः । भेदम् । तस्मात् । वै । सः । परा । अभवत् ॥ ४९ ॥

उतैनां भेदो नाददाद् वशामिन्द्रेण याचितः ।

---

१ P अब्रह्मणः ।. २ A B[h] C D K R S[m] V Dc Cs P J °नुष्ठु. Cp अनुष्ठुं ।. We with E K[m] P. ३ B ता प्र. ४ A B[h] C D E K R सोना°. We with K S[m] V Dc Cs. ५ C K[m] ब्राह्मणा. P Cp ब्राह्मणाः ।. We with A B[h] D E K R S[m] V Dc Cs P[2] J

तस्मात् तं देवा आगसोवृश्चन्नहमुत्तरे ॥ ५० ॥

उत । एनाम् । भेदः । न । अददात् । वशाम् । इन्द्रेण । याचितः ।

तस्मात् । तम् । देवाः । आगसः । अवृश्चन् । अहम्ऽउत्तरे ॥ ५० ॥

ये वशाया अदानाय वदन्ति परिरापिणः ।

इन्द्रस्य मन्यवे जाल्मा आ वृश्चन्ते अचित्त्या ॥ ५१ ॥

ये । वशायाः । अदानाय । वदन्ति । परिऽरापिणः ।

इन्द्रस्य । मन्यवे । जाल्माः । आ । वृश्चन्ते । अचित्त्या ॥ ५१ ॥

ये गोपतिं पराणीयाथाहुर्मा ददा इति ।

रुद्रस्यास्तां ते हेतिं परि यन्त्यचित्त्या ॥ ५२ ॥

ये । गोऽपतिम् । पराऽनीय । अथ । आहुः । मा । ददाः । इति ।

रुद्रस्य । अस्ताम् । ते । हेतिम् । परि । यन्ति । अचित्त्या ॥ ५२ ॥

यदि हुतां यद्यहुतामभा च पचते वशाम् ।

देवान्त्सब्राह्मणानृत्वा जिह्मो लोकान्निर्ऋच्छति ॥ ५३ ॥ (२३)

यदि । हुताम् । यदि । अहुताम् । अमा । च । पचते । वशाम् ।

देवान् । सऽब्राह्मणान् । ऋत्वा । जिह्मः । लोकात् । निः । ऋच्छति ॥ ५३ ॥ (२३)

चतुर्थेनुवाके प्रथमं सूक्तम् ।

इति चतुर्थोनुवाकः ॥

ब्रह्मगवीविषयमेतत् सूक्तम् । ब्राह्मणस्य गौर्ब्रह्मगवी । तां क्षत्रियो नादद्यात् । आदद्याच्चेद् वागू वीर्यं लक्ष्मीस्तं ह्रास्यति । ओजआदि नशिष्यति । तां क्षत्रियो न हन्यात् न पचेत् न भक्षेत् । सा हि हता सती नानाविधा आपदो नानाविधान् मृत्यून् नानाविधानि च दुःखानि ऐहिकान्यामुष्मिकाणि आवहतीत्याह ॥

संप्रदायानुसारेणास्य सूक्तस्य विनियोगस्तु "नैतां ते देवाः" इत्यत्र [५. १८] द्रष्टव्यः ॥

श्रमेण तपसा सृष्टा ब्रह्मणा वित्तर्ते श्रिता ॥ १ ॥

---

१ A B $\overset{h}{B}$ C D E $\overset{m}{K}$ $\overset{m}{S}$ Cs आगसो. P J आगसः ।. Cp आगसः । changed to आगसः ।. Dc आगसो° changed to आगसो°. K R अगसो. We with V Dc $\overset{2}{P}$. V, however, wrongly reads his pada as आगसः ।. २ P $\overset{2}{P}$ J एताम् ।. ३ All our authorities have तें (the pada being ते ।). Rw's correction is of course necessary. ४ P अस्ताम् ।. $\overset{2}{P}$ अस्ताम् ।. We with J Cp. ५ A C D E K $\overset{m}{K}$ V Dc Cs $\overset{2}{P}$ J Cp °निर्ऋछति. We with $\overset{h}{B}$ R P. ६ $\overset{h}{B}$ दृष्टा. ७ So we with all our authorities. See Rw

श्रमेण । तपसा । सृष्टा । ब्रह्मणा । वित्ता । ऋते । श्रिता ॥ १ ॥

**सत्येनावृता श्रिया प्रावृता यशसा परीवृता ॥ २ ॥**

सत्येन । आऽवृता । श्रिया । प्रावृता । यशसा । परिऽवृता ॥ २ ॥

**स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया गुप्ता यज्ञे प्रतिष्ठिता लोको निधनम् ॥ ३ ॥**

स्वधया । परिऽहिता । श्रद्धया । परिऽऊढा । दीक्षया । गुप्ता । यज्ञे । प्रतिऽस्थिता[1] । लोकः । निऽधनम् ॥ ३ ॥

**ब्रह्म पदवायं ब्राह्मणोधिपतिः ॥ ४ ॥**

ब्रह्म । पद्ऽवायम् । ब्राह्मणः । अधिऽपतिः ॥ ४ ॥

**तामाददानस्य ब्रह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य ॥ ५ ॥**

ताम् । आऽददानस्य । ब्रह्मऽगवीम् । जिनतः । ब्राह्मणम्[2] । क्षत्रियस्य ॥ ५ ॥

**अप क्रामति सूनृता वीर्यं[3] पुण्या लक्ष्मीः ॥ ६ ॥ (२८)**

अप । क्रामति । सूनृता । वीर्यम् । पुण्या । लक्ष्मीः ॥ ६ ॥ (२८)

इति पञ्चमेनुवाके प्रथमं पर्यायसूक्तम् ।

**ओजश्च तेजश्च सहश्च बलं च वाक् चेन्द्रियं च श्रीश्च धर्मश्च ॥ १ ॥**

ओजः । च । तेजः । च । सहः । च । बलम् । च । वाक् । च । इन्द्रियम् । च । श्रीः । च । धर्मः । च ॥ १ ॥

**ब्रह्म च क्षत्रं च राष्ट्रं च विशश्च त्विषिश्च यशश्च वर्चश्च द्रविणं च ॥ २ ॥**

ब्रह्म । च । क्षत्रम् । च । राष्ट्रम् । च । विशः । च । त्विषिः । च । यशः । च । वर्चः । च । द्रविणम् । च ॥ २ ॥

**आयुश्च रूपं च नाम च कीर्तिश्च प्राणश्चापानश्च चक्षुश्च श्रोत्रं च ॥ ३ ॥**

आयुः । च । रूपम् । च । नाम । च । कीर्तिः । च । प्राणः । च । अपानः । च । चक्षुः । च । श्रोत्रम् । च ॥ ३ ॥

**पयश्च रसश्चान्नं चान्नाद्यं च[4]र्तं च सत्यं चेष्टं च पूर्तं च प्रजा च पशवश्च ॥ ४ ॥**

---

१ P P[2] J °स्थिताः ।. We with V Cp. २ P ब्रह्मणम् ।. ३ A B B[h] D E R S[m] Dc Cs ३ We with C K K[m] V. ४ So we with all our authorities. See Rw.

पर्यः । च । रसः । च । अन्नम् । च । अन्नऽअद्यम् । च । ऋतम् । च । सत्यम् । च । इष्टम् । च । पूर्तम् । च । प्रऽजा । च । पशवः । च ॥ ४ ॥

**तानि सर्वाण्यप क्रामन्ति[1] ब्रह्मगवीमाददानस्य जिनतो ब्राह्मणं[2] क्षत्रियस्य ॥ ५ ॥ (२५)**

तानि । सर्वाणि । अप । क्रामन्ति । ब्रह्मऽगवीम् । आऽददानस्य । जिनतः । ब्राह्मणम् । क्षत्रियस्य ॥ ५ ॥ (२५)

इति पञ्चमेनुवाके द्वितीयं पर्यायसूक्तम् ॥

**सैषा भीमा ब्रह्मगव्य[3]घविषा साक्षात् कृत्या कूल्बजमावृता ॥ १ ॥**

सा । एषा । भीमा । ब्रह्मऽगवी । अघऽविषा । सऽअक्षात् । कृत्या । कूल्बजम् । आऽवृता[4] ॥ १ ॥

**सर्वाण्यस्यां घोराणि सर्वे च मृत्यवः ॥ २ ॥**

सर्वाणि । अस्याम् । घोराणि । सर्वे । च । मृत्यवः ॥ २ ॥

**सर्वाण्यस्यां क्रूराणि सर्वे पुरुषवधाः ॥ ३ ॥**

सर्वाणि । अस्याम् । क्रूराणि । सर्वे । पुरुषऽवधाः ॥ ३ ॥

**सा ब्रह्मज्यं देवपीयुं[5] ब्रह्मगव्यादीयमाना मृत्योः पड्वीश आ द्यति ॥ ४ ॥**

सा । ब्रह्मऽज्यम् । देवऽपीयुम् । ब्रह्मऽगवी । आऽदीयमाना । मृत्योः । पड्वीशे[6] । आ । द्यति ॥ ४ ॥

**मेनिः शतवधा हि सा ब्रह्मज्यस्य क्षितिर्हि सा ॥ ५ ॥**

मेनिः । शतऽवधा । हि । सा । ब्रह्मऽज्यस्य । क्षितिः । हि । सा ॥ ५ ॥

**तस्माद् वै ब्राह्मणानां गौर्दुराधर्षा विजानता ॥ ६ ॥**

तस्मात् । वै । ब्राह्मणानाम् । गौः । दुःऽआधर्षा । विऽजानता ॥ ६ ॥

**वज्रो धावन्ती वैश्वानर उद्वीता[7] ॥ ७ ॥**

वज्रः । धावन्ती । वैश्वानरः । उत्ऽवीता ॥ ७ ॥

**हेतिः शफानुत्खिदन्ती[8] महादेवो[9]ऽपेक्षमाणा ॥ ८ ॥**

---

१ A B क्रामति. २ P ब्रह्मणम् ।. ३ A B B^h C D E K K^m S^m V Dc Cs ३ (A E °व्या३°). ४ P आवृता ।. ५ D S^m Cs °पीयूं. P °पीयूम् ।. ६ B °बीश्. C K K^m °वीश्. V Dc °विंश. We with A B^h D E R S^m Cs P P^2 J Cp. ७ E उद्वीता. ८ A B^h °खिदंति. ९ D देवो१°.

हेतिः । शफान् । उत्ऽखिदन्ती । महाऽदेवः । अपऽईक्षमाणा ॥ ८ ॥

क्षुरपविरीक्षमाणा वाश्यमानाभि स्फूर्जति[1] ॥ ९ ॥

क्षुरऽपविः । ईक्षमाणा । वाश्यमाना । अभि । स्फूर्जति ॥ ९ ॥

मृत्युर्हिङ्कृण्वत्युग्रो[2] देवः पुच्छं पर्यस्यन्ती ॥ १० ॥

मृत्युः । हिङ्ऽकृण्वती[3] । उग्रः । देवः । पुच्छम् । परिऽअस्यन्ती ॥ १० ॥

सर्वज्यानिः कर्णौ वरीवर्जयन्ती राजयक्ष्मो मेहन्ती ॥ ११ ॥

सर्वऽज्यानिः । कर्णौ । वरीवर्जयन्ती । राजऽयक्ष्मः । मेहन्ती ॥ ११ ॥

मेनिर्दुह्यमाना शीर्षक्तिर्दुग्धा ॥ १२ ॥

मेनिः । दुह्यमाना । शीर्षक्तिः । दुग्धा ॥ १२ ॥

सेदिरुपतिष्ठन्ती मिथोयोधः[4] परामृष्टा ॥ १३ ॥

सेदिः । उपऽतिष्ठन्ती । मिथःऽयोधः । पराऽमृष्टा ॥ १३ ॥

शरव्या३ मुखेपिनह्यमान[5] ऋतिर्हन्यमाना[6] ॥ १४ ॥

शरव्या३ । मुखे । अपिऽनह्यमाने[5] । ऋतिः । हन्यमाना ॥ १४ ॥

अघविषा निपतन्ती तमो निपतिता ॥ १५ ॥

अघऽविषा । निऽपतन्ती । तमः । निऽपतिता ॥ १५ ॥

अनुगच्छन्ती प्राणानुप दासयति ब्रह्मगवी ब्रह्मज्यस्य ॥ १६ ॥ (२६)

अनुऽगच्छन्ती । प्राणान् । उप । दासयति । ब्रह्मऽगवी । ब्रह्मऽज्यस्य ॥ १६ ॥ (२६)

इति पञ्चमेनुवाके तृतीयं पर्यायसूक्तम् ॥

वैरं विकृत्यमाना पौत्राद्यं विभाज्यमाना ॥ १ ॥

वैरम् । विऽकृत्यमाना । पौत्रऽआद्यम् । विऽभाज्यमाना ॥ १ ॥

---

१ C स्पूर्जति. P[2] स्फु°. २ AB[h]CEKK[m]V Dc °त्यू३°. DRCs °कृण्वत्यूग्रो. S[m] °कृण्वत्यूग्रो changed to °कृण्वत्यू३ग्रो. ३ PP[2] हिङ्कृ°. ४ K °योनः (!) ५ AB[h]ER °ने ऋति°. °नर्ऋति°. D °नेरति°. KK[m]S[m]V Cs °नेरिति°. Dc °न ऋति° changed to °नेरिति°. PP[2] Cp °नह्यमाने ।. The context and the saṁhitâ text favor °नह्यमाना in the pada text. K °हृव्यमाना.

देवहेतिर्ह्रियमाणा व्यृद्धिर्हृता ॥ २ ॥

देवऽहेतिः । ह्रियमाणा । विऽऋद्धिः । हृता ॥ २ ॥

पाप्माधिधीयमाना पारुष्यमवधीयमाना ॥ ३ ॥

पाप्मा । अधिऽधीयमाना । पारुष्यम् । अवऽधीयमाना ॥ ३ ॥

विषं प्रयस्यन्ती तक्मा प्रयस्ता ॥ ४ ॥

विषम् । प्रऽयस्यन्ती । तक्मा । प्रऽयस्ता ॥ ४ ॥

अघं पच्यमाना दुष्वप्न्यं पक्वा ॥ ५ ॥

अघम् । पच्यमाना । दुःऽस्वप्न्यम् । पक्वा ॥ ५ ॥

मूलबर्हणी पर्याक्रियमाणा क्षितिः पर्याकृता ॥ ६ ॥

मूलऽबर्हणी । परिऽआक्रियमाणा । क्षितिः । परिऽआकृता ॥ ६ ॥

असंज्ञा गन्धेन शुगुद्ध्रियमाणाशीविष उद्धृता ॥ ७ ॥

असम्ऽज्ञा । गन्धेन । शुक् । उद्ध्रियमाणा । आशीविषः । उद्धृता ॥ ७ ॥

अभूतिरुपह्रियमाणा पराभूतिरुपहृता ॥ ८ ॥

अभूतिः । उपऽह्रियमाणा । पराऽभूतिः । उपऽहृता ॥ ८ ॥

शर्वः क्रुद्धः पिश्यमाना शिमिदा पिशिता ॥ ९ ॥

शर्वः । क्रुद्धः । पिश्यमाना । शिमिदा । पिशिता ॥ ९ ॥

अवर्तिरश्यमाना निर्ऋतिरशिता ॥ १० ॥

अवर्तिः । अश्यमाना । निःऽऋतिः । अशिता ॥ १० ॥

अशिता लोकाच्छिनत्ति ब्रह्मगवी ब्रह्मज्यमस्माच्चामुष्माच्च ॥ ११ ॥ (२७)

अशिता । लोकात् । छिनत्ति । ब्रह्मऽगवी । ब्रह्मऽज्यम् । अस्मात् । च । अमुष्मात् । च ॥ ११ ॥ (२७)

इति पञ्चमेनुवाके चतुर्थं पर्यायसूक्तम् ॥

---

१ A C D E R S[m] Cs ॰हेतिर्हृयमाणा. We with K K[m] V Dc P P[2] J Cp. २ E R व्यृद्धिर्हृता. B[h] वृद्धिर्हृता. We with A C D K K[m] S[m] V Dc Cs. ३ P देवाऽहेतिः।. ४ P ऋता।. ५ B[h] E प्रयछन्ती. ६ A शकुध्रि॰. B शनुकुध्रि॰. D K K[m] S[m] V Dc Cs शगुध्रि॰. We with B[h] C E R. ७ B उद्धता. ८ P P[2] J Cp उध्रिय॰।. ९ P ॰नाः।. १० B[h] C K K[m] S[m] V लोकाञ्छि॰. We with A B D E R P P[2] J Cp.

तस्या आहननं कृत्या मेनिराशसनं वलग ऊबध्यम् ॥ १ ॥

तस्याः । आऽहननम् । कृत्या । मेनिः । आऽशसनम् । वलगः । ऊबध्यम् ॥ १ ॥

अस्वगता परिह्णुता ॥ २ ॥

अस्वगता । परिऽह्णुता ॥ २ ॥

अग्निः क्रव्याद् भूत्वा ब्रह्मगवी ब्रह्मज्यं प्रविश्याति ॥ ३ ॥

अग्निः । क्रव्यऽअत् । भूत्वा । ब्रह्मऽगवी । ब्रह्मऽज्यम् । प्रऽविश्य । अत्ति ॥ ३ ॥

सर्वास्याङ्गा पर्वा मूलानि वृश्चति ॥ ४ ॥

सर्वा । अस्य । अङ्गा । पर्वा । मूलानि । वृश्चति ॥ ४ ॥

छिनत्त्यस्य पितृबन्धु परा भावयति मातृबन्धु ॥ ५ ॥

छिनत्ति । अस्य । पितृऽबन्धु । परा । भावयति । मातृऽबन्धु ॥ ५ ॥

विवाहां ज्ञातीन्त्सर्वानपि क्षापयति ब्रह्मगवी ब्रह्मज्यस्य क्षत्रियेणापुनर्दीयमाना ॥ ६ ॥

विऽवाहान् । ज्ञातीन् । सर्वान् । अपि । क्षापयति । ब्रह्मऽगवी । ब्रह्मऽज्यस्य । क्षत्रियेण । अपुनःऽदीयमाना ॥ ६ ॥

अवास्तुमेनमस्वगमप्रजसं करोत्यपरापरणो भवति क्षीयते ॥ ७ ॥

अवास्तुम् । एनम् । अस्वगम् । अप्रजसम् । करोति । अपराऽपरणः । भवति । क्षीयते ॥ ७ ॥

य एवं विदुषो ब्राह्मणस्य क्षत्रियो गामादत्ते ॥ ८ ॥ (२८)

यः । एवम् । विदुषः । ब्राह्मणस्य । क्षत्रियः । गाम् । आऽदत्ते ॥ ८ ॥ (२८)

इति पञ्चमेऽनुवाके पञ्चमं पर्यायसूक्तम् ॥

क्षिप्रं वै तस्याहनने गृध्राः कुर्वत ऐलबम् ॥ १ ॥

क्षिप्रम् । वै । तस्य । आऽहनने । गृध्राः । कुर्वते । ऐलबम् ॥ १ ॥

क्षिप्रं वै तस्यादहनं परि नृत्यन्ति केशिनीराघ्नानाः पाणिनोरसि कुर्वाणाः पापमैलबम् ॥ २ ॥

---

१ B[h] S[m] परिहृता (may be °न्हु°). We with A C D E K K[m] V P P[2] J Cp. २ A B B[h] D K K[m] V Dc °पुनर्दीयमाना. P[2] अपुनःऽदीयमाना ।. V Cp अपुनः । दीयमाना ।. Cs °पुनर्दीयमाना. We with C E R S[m] P J. ३ B भवति. ४ P एलबम् ।. We with P[2] J Cp.

॰तस्य॑ । आ॒ऽद॒हन॑म् । परि॑ । नृ॒त्य॒न्ति॒ । के॒शिनीः॑ ।
आ॒ऽघ्नानाः॑ । पा॒णिना॑ । उर॑सि । कु॒र्वा॒णाः । पा॒पम् । ऐ॒ल॒बम् ॥ २ ॥

क्षि॒प्रं वै तस्य॑[1] वास्तु॑षु वृका॑ः कुर्वत ऐलबम् ॥ ३ ॥

॰तस्य॑ । वास्तु॑षु । वृका॑ः । कु॒र्व॒ते॒ । ऐ॒ल॒बम् ॥ ३ ॥

क्षि॒प्रं वै तस्य॑ पृ॒च्छ॒न्ति॒ यत् तदासी॑३[2]दि॒दं नु ता३दिति॑ ॥ ४ ॥

क्षि॒प्रम् । वै । तस्य॑ । पृ॒च्छ॒न्ति॒ । यत् । तत् । आसी॑३त् । इ॒दम् । नु॒ । ता३त् । इति॑ ॥ ४ ॥

छि॒न्ध्या च्छि॑न्धि॒ प्र च्छि॒न्ध्यपि॑ क्षापय क्षा॒पय॑ ॥ ५ ॥

छि॒न्धि । आ । छि॒न्धि॒ । प्र । छि॒न्धि॒ । अपि॑ । क्षा॒प॒य॒ । क्षा॒पय॑ ॥ ५ ॥

आ॒द॒दा॑नमाङ्गिर॑सि[3] ब्रह्म॒ज्यमुप॑ दासय ॥ ६ ॥

आ॒ऽद॒दा॑नम् । आ॒ङ्गि॒र॒सि॒[4] । ब्र॒ह्म॒ऽज्यम् । उप॑ । दा॒स॒य॒ ॥ ६ ॥

वै॒श्व॒दे॒वी ह्यु॑१च्यसे॑[5] कृ॒त्या कूल्ब॑जमावृ॑ता ॥ ७ ॥

वै॒श्व॒ऽदे॒वी । हि । उ॒च्यसे॑ । कृ॒त्या । कूल्ब॑जम्[6] । आ॒ऽवृ॑ता ॥ ७ ॥

ओष॑न्ती स॒मोष॑न्ती ब्रह्म॑णो॒ वज्र॑ः ॥ ८ ॥

ओष॑न्ती । स॒म्ऽओष॑न्ती । ब्रह्म॑णः । वज्र॑ः ॥ ८ ॥

क्षु॒रप॑विर्मृ॒त्युर्भू॒त्वा वि धा॑व॒ त्वम् ॥ ९ ॥

क्षु॒रऽप॑विः । मृ॒त्युः । भू॒त्वा । वि । धा॒व॒ । त्वम् ॥ ९ ॥

आ द॑त्से जिन॒तां वर्च॑ इ॒ष्टं पू॒र्तं चा॒शिष॑ः ॥ १० ॥

आ । द॒त्से॒ । जि॒न॒ताम् । वर्च॑ः । इ॒ष्टम् । पू॒र्तम् । च॒ । आ॒ऽशिष॑ः ॥ १० ॥

आ॒दाय॑ जी॒तं जी॒ताय॑ लो॒के[7]३॒मुष्मि॑न् प्र य॑च्छसि ॥ ११ ॥

आ॒ऽदाय॑ । जी॒तम् । जी॒ताय॑ । लो॒के । अ॒मुष्मि॑न् । प्र । य॒च्छ॒सि॒ ॥ ११ ॥

---

१ B तस्या. २ K K̃ V तदासीदि॒दं नु ता३दिति॑. D Cs तदासी॑१दि॒दं नु ता१दिति॑. C तदासी॑दि॒दं नु ता३दिति॑. S̃ तदासी३दि॒दं नु ता१दिति॑. P आसीत् ३ । तात् ३ ।. P̃ आसी३त् । ता३त् ।. Cp आ॒सी॒त् । इ॒दं । नु । तात् । changed to आसी॑त् । इ॒दं । नु । तात् ३ ।. J आसी॑३त् । ता३त् ।. A B̃ E R Dc. तदासी॑३दि॒दं नु ता३दिति॑. ३ B K̃ ॰रसिब्र॑॰. ४ P आ॑ङ्गि॒र॒सि ।. ५ D Cs ॰ह्यू॰ (no kampa). E R ॰ह्यु॒३॰. K ॰ह्यू॒१॰. V ॰ह्यु१॰. Dc ॰ह्यु॒१॰. A B̃ C ॰ह्यू॒३॰. ६ P̃ कूल्व॑जम् ।. ७ B लो॒के॒१॰.

[1]अघ्न्ये पदवीर्भव ब्राह्मणस्याभिशस्त्या ॥ १२ ॥

अघ्न्ये । पदऽवीः । भव । ब्राह्मणस्य । अभिऽशस्त्या ॥ १२ ॥

मेनिः शरव्या भवाघादघविषा भव ॥ १३ ॥

मेनिः । शरव्या । भव । अघात् । अघऽविषा । भव ॥ १३ ॥

[2]अघ्न्ये प्र शिरो जहि ब्रह्मज्यस्य कृतागसो देवपीयोरराधसः ॥ १४ ॥

अघ्न्ये । प्र । शिरः । जहि । ब्रह्मऽज्यस्य । कृतऽआगसः । देवऽपीयोः । अराधसः ॥ १४ ॥

त्वया प्रमूर्णं मृदितमग्निर्दहतु दुश्चितम् ॥ १५ ॥ (२९)

त्वया । प्रऽमूर्णम् । मृदितम् । अग्निः । दहतु । दुःऽचितम् ॥ १५ ॥ (२९)

इति पञ्चमेनुवाके षष्ठं पर्यायसूक्तम् ॥

वृश्च प्र वृश्च सं वृश्च दह प्र दह सं दह ॥ १ ॥

वृश्च । प्र । वृश्च । सम् । वृश्च । दह । प्र । दह । सम् । दह ॥ १ ॥

ब्रह्मज्यं देव्यघ्न्य आ मूलादनुसंदह ॥ २ ॥

ब्रह्मऽज्यम् । देवि । अघ्न्ये । आ । मूलात् । अनुऽसंदह ॥ २ ॥

यथा[3]याद् यमसादनात् पापलोकान् परावतः ॥ ३ ॥

यथा । [3]अयात् । यमऽसदनात् । पापऽलोकान् । पराऽवतः ॥ ३ ॥

एवा त्वं देव्यघ्न्ये ब्रह्मज्यस्य कृतागसो देवपीयोरराधसः ॥ ४ ॥

एव । त्वम् । देवि । अघ्न्ये । ब्रह्मऽज्यस्य । कृतऽआगसः । देवऽपीयोः । अराधसः ॥ ४ ॥

वज्रेण शतपर्वणा तीक्ष्णेन क्षुरभृष्टिना ॥ ५ ॥

वज्रेण । शतऽपर्वणा । तीक्ष्णेन । क्षुरऽभृष्टिना ॥ ५ ॥

प्र स्कन्धान् प्र शिरो जहि ॥ ६ ॥

प्र । स्कन्धान् । प्र । शिरः । जहि ॥ ६ ॥

लोमान्यस्य सं छिन्धि त्वचमस्य वि वेष्टय ॥ ७ ॥

लोमानि । अस्य । सम् । छिन्धि । त्वचम् । अस्य । वि । वेष्टय ॥ ७ ॥

---

१ R S^m अघ्न्येऽ. २ R अघ्न्ये. ३ So our authorities of saṁhitâ and pada respectively. We should expect यथा याद् यम° and यथा । यात् । यम° ।.

मांसान्यस्य शातय स्नावान्यस्य सं वृह ॥ ८ ॥

मांसानि । अस्य । शातय । स्नावानि । अस्य । सम् । वृह ॥ ८ ॥

अस्थीन्यस्य पीडय मज्जानमस्य निर्जहि ॥ ९ ॥

अस्थीनि । अस्य । पीडय । मज्जानम् । अस्य । निः । जहि ॥ ९ ॥

सर्वास्याङ्गा पर्वाणि वि श्रथय ॥ १० ॥

सर्वा । अस्य । अङ्गा । पर्वाणि । वि । श्रथय ॥ १० ॥

अग्निरेनं क्रव्यात् पृथिव्या नुदतामुदोषतु वायुरन्तरिक्षान्महतो वरिम्णः ॥ ११ ॥

अग्निः । एनम् । क्रव्यऽअत् । पृथिव्याः । नुदताम् । उत् । ओषतु । वायुः । अन्तरिक्षात् । महतः । वरिम्णः ॥ ११ ॥

सूर्य एनं दिवः प्र णुदतां न्योषतु ॥ १२ ॥ (३०)

सूर्यः । एनम् । दिवः । प्र । नुदताम् । नि । ओषतु ॥ १२ ॥ (३०)

पञ्चमेनुवाके सप्तमं पर्यायसूक्तम् ॥

पञ्चमोनुवाकः ॥

इति द्वादशं काण्डं समाप्तम् ॥

---

१ D E K[m] S[m] बृंह. Cp बृह । . We with A B[h] C K R V Dc C~ P P[2] J. २ J V Cp विश्रं° । . P[2] वि । श्रंथय । . P विश्रथय । .

"उदेहि वाजिन्" इति सूक्तं रोहितदेवताकम् । रोहितः कश्चिद् देवः । उद्यन् य. सूर्यस्तदात्मक इति ज्ञेयम् । रोहितसाहचर्येण मरुतः इन्द्रः अज एकपादः अग्निः सविता मित्रावरुणौ क्रव्याद् अग्निः सूर्य इत्यादयो देवा अप्याहूता वर्णिताश्च । रोहितस्य तथा तत्संबन्धिदेवानामत्र वर्णने प्रयोजनं राज्ञो राष्ट्रस्य भरणम् इति सूक्त इतस्ततो द्रष्टव्यम् ॥

क्वचिन्मन्त्रे रोहितपदस्य निर्वचनं रुहो रुरोह प्ररुहो रुरोह द्यावापृथिवीभ्यां रुरोहेति रोहित इति ध्वनितम् ॥

याज्ञिकास्तु वक्ष्यमाणप्रकारेण विनियुञ्जन्ति । तद्यथा ।

अर्थकामः "उदेहि वाजिन्" इत्यादिविंशत्यृग्भिरुद्यन्तम् आदित्यम् उपतिष्ठते ॥

तथा अर्थोत्थापनकामः उक्तविंशत्यृग्भिः स्नानं कृत्वा उपतिष्ठते ॥

तथा अर्थसिद्धिकामः अहतवस्त्रपरिधान कृत्वा उक्ताभिर्ऋग्भिरुपतिष्ठते ॥

तथा अर्थो मम सिध्यताम् एवंकामस्ताभिर्ऋग्भिर्वस्त्रम् अभिमन्त्र्य परिधापयति ॥

तथा विद्रावणादिविषये शमनकामः उक्ताभिर्ऋग्भिर्वस्त्रम् अभिमन्त्र्य ददाति ॥

सूत्रित हि । "°उत्तमेन [६. ६२] वाचस्पतिलिङ्गाभिरुद्यन्तम् उपतिष्ठते । स्नातोऽहतवसनो निक्त्वाहतम् आच्छादयते ददाति" इति । कौ° ५. ५ ॥ उदेहि वाजिन्निति विंशत्यृचो वाचस्पतिलिङ्गा इति केशवः ॥

"यो रोहितः" इति द्वयोर्ऋचोः [२५, २६] सलिलगणे पाठः । अतः "सलिलैः क्षीरौदनम् अश्नाति मन्थान्तानि" [कौ° ३. १] "सलिलैः सर्वकामः" [कौ° ३. ७] इत्यादौ चास्य विनियोगः ॥ सलिलगणश्च "आपो हि ष्ठा" इति १. ५ सूक्ते द्रष्टव्यः ॥

"समिद्धो अग्निः समिधानो घृतवृद्धः" इति [२८–३२] पञ्चर्चस्य विनियोगो "य इमे द्यावापृथिवी" [१३. ३] इत्यत्र द्रष्टव्यः ॥

**उदेहि वाजिन् यो अप्स्व१न्तरिदं राष्ट्रं प्र विश सूनृतावत् ।**
**यो रोहितो विश्वमिदं जजान स त्वा राष्ट्राय सुभृतं बिभर्तु ॥ १ ॥**

उत्ऽएहि । वाजिन् । यः । अप्ऽसु । अन्तः । इदम् । राष्ट्रम् । प्र । विश । सूनृताऽवत् ।
यः । रोहितः । विश्वम् । इदम् । जजान । सः । त्वा । राष्ट्राय । सुऽभृतम् । बिभर्तु ॥ १ ॥

**उद्वाज आ गन् यो अप्स्व१न्तर्विश आ रोह त्वद्योनयो याः ।**
**सोमं दधानोप ओषधीर्गाश्चतुष्पदो द्विपद आ वेशयेह ॥ २ ॥**

उत् । वाजः । आ । गन् । यः । अप्ऽसु । अन्तः । विशः । आ । रोह । त्वत्ऽयोनयः । याः ।
सोमम् । दधानः । अपः । ओषधीः । गाः । चतुःऽपदः । द्विऽपदः । आ । वेशय । इह ॥ २ ॥

**यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।**

---

१ B B[h] C D E R S[m] Cs ३. We with K K[m] V Dc.

आ वो रोहितः शृणवत् सुदानवस्त्रिषप्तासो मरुतः स्वादुसंमुदः ॥ ३ ॥

यूयम् । उग्राः । मरुतः । पृश्निऽमातरः । इन्द्रेण । युजा । प्र । मृणीत । शत्रून् ।
आ । वः । रोहितः । शृणवत् । सुऽदानवः । त्रिऽसप्तासः । मरुतः । स्वादुऽसंमुदः ॥ ३ ॥

रुहो रुरोह रोहित आ रुरोह गर्भो जनीनां जनुषामुपस्थम् ।
ताभिः संरब्धमन्वविन्दन् षडुर्वीर्गातुं प्रपश्यन्निह राष्ट्रमाहाः ॥ ४ ॥

रुहः । रुरोह । रोहितः । आ । रुरोह । गर्भः । जनीनाम् । जनुषाम् । उपऽस्थम् ।
ताभिः । सम्ऽरब्धम् । अनु । अविन्दन् । षट् । उर्वीः । गातुम् । प्रऽपश्यन् । इह । राष्ट्रम् । आ । अहाः ॥ ४ ॥

आ ते राष्ट्रमिह रोहितोहार्षीद् व्यास्थन्मृधो अभयं ते अभूत् ।
तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहाथामिह शक्वरीभिः ॥ ५ ॥

आ । ते । राष्ट्रम् । इह । रोहितः । अहार्षीत् । वि । आस्थत् । मृधः । अभयम् । ते । अभूत् ।
तस्मै । ते । द्यावापृथिवी इति । रेवतीभिः । कामम् । दुहाथाम् । इह । शक्वरीभिः ॥ ५ ॥

रोहितो द्यावापृथिवी जजान तत्र तन्तुं परमेष्ठी ततान ।
तत्र शिश्रियेज एकपादोदृंहद् द्यावापृथिवी बलेन ॥ ६ ॥

रोहितः । द्यावापृथिवी इति । जजान । तत्र । तन्तुम् । परमेऽस्थी । ततान ।
तत्र । शिश्रिये । अजः । एकऽपादः । अदृंहत् । द्यावापृथिवी इति । बलेन ॥ ६ ॥

रोहितो द्यावापृथिवी अदृंहत् तेन स्वः स्तभितं तेन नाकः ।
तेनान्तरिक्षं विमिता रजांसि तेन देवा अमृतमन्वविन्दन् ॥ ७ ॥

रोहितः । द्यावापृथिवी इति । अदृंहत् । तेन । स्वः । स्तभितम् । तेन । नाकः ।
तेन । अन्तरिक्षम् । विऽमिता । रजांसि । तेन । देवाः । अमृतम् । अनु । अविन्दन् ॥ ७ ॥

वि रोहितो अमृशद् विश्वरूपं समाकुर्वाणः प्ररुहो रुहश्च ।
दिवं रूढ्वा महता महिम्ना सं ते राष्ट्रमनक्तु पयसा घृतेन ॥ ८ ॥

---

१ K K^m V Dc संरभ्य°. २ A D S^m Cs °तो अहार्षी°. We with B^h C E K K^m R V Dc. ३ B^h C E R S^m °द्यास्थ° for °द् व्यास्थ°. We with A D K K^m V. ४ A B^h C D E K K^m R S^m V Dc Cs दुहाथा°. P P^2 J Cp दुहाथाम् ।. The emendation to °ता° adopted by Rw. is not inevitable, though desirable. ५ P रेवतिभिः ।. ६ B B^h D E R S^m स्व. ७ R रुढ्वा.

वि । रोहितः । अमृशत् । विश्वऽरूपम् । सम्ऽआकुर्वाणः । प्रऽरुहः । रुहः । च ।
दिवम् । रूढ्वा । महता । महिम्ना । सम् । ते । राष्ट्रम् । अनक्तु । पयसा । घृतेन ॥ ८ ॥

यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणासि दिवमन्तरिक्षम् ।
तासां ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि रोहितस्य ॥ ९ ॥

याः । ते । रुहः । प्रऽरुहः । याः । ते । आऽरुहः । याभिः । आऽपृणासि । दिवम् । अन्तरिक्षम् ।
तासाम् । ब्रह्मणा । पयसा । ववृधानः । विशि । राष्ट्रे । जागृहि । रोहितस्य ॥ ९ ॥

यास्ते विशस्तपसः संबभूवुर्वत्सं गायत्रीमनु ता इहागुः ।
तास्त्वा विशन्तु मनसा शिवेन संमाता वत्सो अभ्येतु रोहितः ॥१०॥(१)

याः । ते । विशः । तपसः । सम्ऽबभूवुः । वत्सम् । गायत्रीम् । अनु । ताः । इह । आ । अगुः ।
ताः । त्वा । आ । विशन्तु । मनसा । शिवेन । सम्ऽमाता । वत्सः । अभि । एतु । रोहितः ॥ १० ॥ (१)

ऊर्ध्वो रोहितो अधि नाके अस्थाद् विश्वा रूपाणि जनयन् युवा कविः ।
तिग्मेनाग्निर्ज्योतिषा वि भाति तृतीये चक्रे रजसि प्रियाणि ॥ ११ ॥

ऊर्ध्वः । रोहितः । अधि । नाके । अस्थात् । विश्वा । रूपाणि । जनयन् । युवा । कविः ।
तिग्मेन । अग्निः । ज्योतिषा । वि । भाति । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ११ ॥

सहस्रशृङ्गो वृषभो जातवेदा घृताहुतः सोमपृष्ठः सुवीरः ।
मा मा हासीन्नाथितो नेत् त्वा जहानि गोपोषं च मे वीरपोषं च धेहि॥१२॥

सहस्रऽशृङ्गः । वृषभः । जातऽवेदाः । घृतऽआहुतः । सोमऽपृष्ठः । सुऽवीरः[१] ।
मा । मा । हासीत् । नाथितः । न । इत् । त्वा । जहानि । गोऽपोषम् । च । मे । वीरऽपोषम् । च । धेहि ॥ १२ ॥

रोहितो यज्ञस्य जनिता मुखं च रोहिताय वाचा श्रोत्रेण मनसा जुहोमि ।
रोहितं देवा यन्ति सुमनस्यमाना स[२] मा रोहैः सामित्यै रोहयतु ॥ १३ ॥

रोहितः । यज्ञस्य । जनिता । मुखम् । च । रोहिताय । वाचा । श्रोत्रेण । मनसा । जुहोमि ।
रोहितम् । देवाः । यन्ति । सुऽमनस्यमानाः । सः । मा । रोहैः । साम्ऽइत्यै । रोहयतु ॥ १३ ॥

---

१ P सुऽवीराः ।. २ R सं.

रोहितो यज्ञं व्यदधाद् विश्वकर्मणे तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं भुवनस्याधि मज्मनि ॥ १४ ॥

रोहितः । यज्ञम् । वि । अदधात् । विश्वऽकर्मणे । तस्मात् । तेजांसि । उप । मा । इमानि । आ । अगुः ।
वोचेयम् । ते । नाभिम् । भुवनस्य । अधि । मज्मनि ॥ १४ ॥

आ त्वा रुरोह बृहत्यू३त पङ्क्तिरा ककुब् वर्चसा जातवेदः ।
आ त्वा रुरोहोष्णिहाक्षरो वषट्कार आ त्वा रुरोह रोहितो रेतसा सह ॥१५॥

आ । त्वा । रुरोह । बृहती । उत । पङ्क्तिः । आ । ककुप् । वर्चसा । जातऽवेदः ।
आ । त्वा । रुरोह । उष्णिहाऽअक्षरः । वषट्ऽकारः । आ । त्वा । रुरोह । रोहितः । रेतसा । सह ॥ १५ ॥

अयं वस्ते गर्भं पृथिव्या दिवं वस्तेयमन्तरिक्षम् ।
अयं ब्रध्नस्य विष्टपि स्वर्लोकान् व्यानिशे ॥ १६ ॥

अयम् । वस्ते । गर्भम् । पृथिव्याः । दिवम् । वस्ते । अयम् । अन्तरिक्षम् ।
अयम् । ब्रध्नस्य । विष्टपि । स्वः । लोकान् । वि । आनशे ॥ १६ ॥

वाचस्पते पृथिवी नः स्योना स्योना योनिस्तल्पा नः सुशेवा ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् पर्यग्निरायुषा वर्चसा दधातु ॥ १७ ॥

वाचः । पते । पृथिवी । नः । स्योना । स्योना । योनिः । तल्पा । नः । सुऽशेवा ।
इह । एव । प्राणः । सख्ये । नः । अस्तु । तम् । त्वा । परमेऽस्थिन् । परि । अग्निः । आयुषा । वर्चसा । दधातु ॥ १७ ॥

वाचस्पत ऋतवः पञ्च ये नौ वैश्वकर्मणाः परि ये संबभूवुः ।

---

१ B C D E R S̃ Cs P P̃ J Cp मय्मनि. Dc मय्मनि changed to मज्मनि. २ C D Dc Cs °हत्यू३त. E °हत्यु३त्त. R °हत्युत्त. S̃ °हत्यू३त. ३ B̃ दिवं च वस्ते°. ४ D E S̃ Cs नं स्योना. ५ B E K K̃ R सुशेवाः. We with A B̃ C D S̃ V Dc Cs P P̃ J Cp. ६ So P P̃ J Cp, and not तल्पाः ।. ७ A B̃ C D E K R S̃ V Dc Cs P P̃ J Cp ये नैा. B K̃ read योनैा for ये नैा. The passage is not free from suspicion of corruption.

इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् परि रोहित आयुषा व-
र्चसा दधातु ॥ १८ ॥

पते । ऋतवः । पञ्च । ये । नौ । वैश्वऽकर्मणाः । परि । ये । सम्ऽबभूवुः ।
°परि । रोहितः । आयुषा । वर्चसा । दधातु ॥ १८ ॥

वाचस्पते सौमनसं मनश्च गोष्ठे नो गा जनय योनिषु प्रजाः ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् पर्यहमायुषा वर्चसा द-
धामि ॥ १९ ॥

वाचः । पते । सौमनसम् । मनः । च । गोऽस्थे । नः । गाः । जनय । योनिषु । प्रऽजाः ।
इह । एव । प्राणः । सख्ये । नः । अस्तु । तम् । त्वा । परमेऽस्थिन् । परि । अहम् । आ-
युषा । वर्चसा । दधामि ॥ १९ ॥

परि त्वा धात् सविता देवो अग्निर्वर्चसा मित्रावरुणावभि त्वा ।
सर्वा अरातीरवक्रामन्नेहीदं राष्ट्रमकरः सूनृतावत् ॥ २० ॥(२)

परि । त्वा । धात् । सविता । देवः । अग्निः । वर्चसा । मित्रावरुणौ । अभि । त्वा ।
सर्वाः । अरातीः । अवऽक्रामन् । आ । इहि । इदम् । राष्ट्रम् । अकरः । सूनृताऽवत् ॥ २० ॥(२)

यं त्वा पृषती रथे प्रष्टिर्वहति[1] रोहित[2] ।
शुभा यासि रिणन्नपः[3] ॥ २१ ॥

यम् । त्वा । पृषती । रथे । प्रष्टिः । वहति । रोहित ।
शुभा । यासि । रिणन् । अपः ॥ २१ ॥

अनुव्रता रोहिणी रोहितस्य सूरिः सुवर्णा बृहती सुवर्चाः ।
तया वाजान् विश्वरूपां[5] जयेम तया विश्वाः पृतना अभि ष्याम[4] ॥ २२ ॥

अनुऽव्रता । रोहिणी । रोहितस्य । सूरिः । सुऽवर्णा । बृहती । सुऽवर्चाः ।
तया । वाजान् । विश्वऽरूपान् । जयेम । तया । विश्वाः । पृतनाः । अभि । स्याम ॥ २२ ॥

---

१ A प्रष्टि°. B[h] C K K[m] V Dc P P[2] Cp पृष्टि°. S[m] प्रष्टि° changed to प्रष्टि°. We with D E R Cs J. २ B[h] R S[m] Cs रोहितः. P Cp रोहितः ।. ३ B E K R P P[2] J ऋणन्नपः. S[m] यासि रि° changed to यास्यृ°. We with A B[h] C D K[m] V Dc Cs Cp. ४ C स्याम. ५ P P[2] J °रूपाम् ।. Cp °रूपां ।.

इदं सदो रोहिणी रोहितस्यासौ पन्थाः पृषती येन याति ।
तां गन्धर्वाः कश्यपा उन्नयन्ति तां रक्षन्ति कवयोऽप्रमादम् ॥ २३ ॥

इदम् । सदः । रोहिणी । रोहितस्य । असौ । पन्थाः । पृषती । येन । याति ।
ताम् । गन्धर्वाः । कश्यपाः । उत् । नयन्ति । ताम् । रक्षन्ति । कवयः । अप्रऽमादम् ॥ २३ ॥

सूर्यस्याश्वा हरयः केतुमन्तः सदा वहन्त्यमृताः सुखं रथम् ।
घृतपावा रोहितो भ्राजमानो दिवं देवः पृषतीमा विवेश ॥ २४ ॥

सूर्यस्य । अश्वाः । हरयः । केतुऽमन्तः । सदा । वहन्ति । अमृताः । सुऽखम् । रथम् ।
घृतऽपावा । रोहितः । भ्राजमानः । दिवम् । देवः । पृषतीम् । आ । विवेश ॥ २४ ॥

यो रोहितो वृषभस्तिग्मशृङ्गः पर्यग्निं परि सूर्यं बभूव ।
यो विष्टभ्नाति पृथिवीं दिवं च तस्माद् देवा अधि सृष्टीः सृजन्ते ॥ २५ ॥

यः । रोहितः । वृषभः । तिग्मऽशृङ्गः । परि । अग्निम् । परि । सूर्यम् । बभूव ।
यः । विऽस्तभ्नाति । पृथिवीम् । दिवम् । च । तस्मात् । देवाः । अधि । सृष्टीः । सृजन्ते ॥ २५ ॥

रोहितो दिवमारुहन्महतः पर्यर्णवात् ।
सर्वा रुरोह रोहितो रुहः ॥ २६ ॥

रोहितः । दिवम् । आ । अरुहत् । महतः । परि । अर्णवात् ।
सर्वाः । रुरोह । रोहितः । रुहः ॥ २६ ॥

वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्पृगेषा ।
इन्द्रः सोमं पिबतु क्षेमो अस्त्वग्निः प्र स्तौतु वि मृधो नुदस्व ॥ २७ ॥

वि । मिमीष्व । पयस्वतीम् । घृताचीम् । देवानाम् । धेनुः । अनपऽस्पृक् । एषा ।
इन्द्रः । सोमम् । पिबतु । क्षेमः । अस्तु । अग्निः । प्र । स्तौतु । वि । मृधः । नुदस्व ॥ २७ ॥

समिद्धो अग्निः समिधानो घृतवृद्धो घृताहुतः ।
अभीषाड् विश्वाषाडग्निः सपत्नान् हन्तु ये मम ॥ २८ ॥

---

१ D Cs तान् for तां. २ A B B[h] C D E K K[m] R S[m] Cs गंधर्वाः. Dc गंधर्वाः changed to गंधर्वाः. P J Cp गंधर्वाः।. We with V Dc P[2]. ३ P P[2] J रोहिणीः।. We with Cp.

सम्ऽइद्धः । अग्निः । सम्ऽइधानः । घृतऽवृद्धः । घृतऽआहुतः ।
अभीषाट् । विश्वाषाट् । अग्निः । सऽपत्नान् । हन्तु । ये । मम ॥ २८ ॥

हन्त्वेनान् प्र दहत्वरिर्यो नः पृतन्यति ।
क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ॥ २९ ॥

हन्तु । एनान् । प्र । दहतु । अरिः । यः । नः । पृतन्यति ।
क्रव्यऽअदा । अग्निना । वयम् । सऽपत्नान् । प्र । दहामसि ॥ २९ ॥

अवाचीनानव जहीन्द्र वज्रेण बाहुमान् ।
अधा सपत्नान् मामकानग्नेस्तेजोभिरादिषि ॥ ३० ॥(३)

अवाचीनान् । अव । जहि । इन्द्र । वज्रेण । बाहुऽमान् ।
अध । सऽपत्नान् । मामकान् । अग्नेः । तेजःऽभिः । आ । अदिषि ॥ ३० ॥(३)

अग्ने सपत्नानधरान् पादयास्मद् व्यथया सजातमुत्पिपानं बृहस्पते ।
इन्द्राग्नी मित्रावरुणावधरे पद्यन्तामप्रतिमन्यूयमानाः ॥ ३१ ॥

अग्ने । सऽपत्नान् । अधरान् । पादय । अस्मत् । व्यथय । सऽजातम् । उत्ऽपिपानम् ।
बृहस्पते ।
इन्द्राग्नी इति । मित्रावरुणौ । अधरे । पद्यन्ताम् । अप्रतिऽमन्यूयमानाः ॥ ३१ ॥

उद्यंस्त्वं देव सूर्य सपत्नानव मे जहि ।
अवैनानश्मना जहि ते यन्त्वधमं तमः ॥ ३२ ॥

उत्ऽयन् । त्वम् । देव । सूर्य । सऽपत्नान् । अव । मे । जहि ।
अव । एनान् । अश्मना । जहि । ते । यन्तु । अधमम् । तमः ॥ ३२ ॥

वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽन्तरिक्षम् ।
घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति ॥ ३३ ॥

वत्सः । विऽराजः । वृषभः । मतीनाम् । आ । रुरोह । शुक्रऽपृष्ठः । अन्तरिक्षम् ।
घृतेन । अर्कम् । अभि । अर्चन्ति । वत्सम् । ब्रह्म । सन्तम् । ब्रह्मणा । वर्धयन्ति ॥ ३३ ॥

दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह ।

---

१ K दहत्वग्निर्यो. २ P² एनाम् ।. ३ B अर्वाची°. ४ B B^h R Cs P² °पृष्ठो°.

प्रजां च रोहामृतं च रोह रोहितेन तन्वं१ सं स्पृशस्व ॥ ३४ ॥

दिवम् । च । रोह । पृथिवीम् । च । रोह । राष्ट्रम् । च । रोह । द्रविणम् । च । रोह । प्रऽजाम् । च । रोह । अमृतम् । च । रोह । रोहितेन । तन्वा । सम् । स्पृशस्व ॥ ३४ ॥

ये देवा राष्ट्रभृतोभितो यन्ति सूर्यम् ।
तैष्टे रोहितः संविदानो राष्ट्रं दधातु सुमनस्यमानः ॥ ३५ ॥

ये । देवाः । राष्ट्रऽभृतः । अभितः । यन्ति । सूर्यम् ।
तैः । ते । रोहितः । सम्ऽविदानः । राष्ट्रम् । दधातु । सुऽमनस्यमानः ॥ ३५ ॥

उत् त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा वहन्ति ।
तिरः समुद्रमति रोचसेर्णवम् ॥ ३६ ॥

उत् । त्वा । यज्ञाः । ब्रह्मऽपूताः । वहन्ति । अध्वऽगतः । हरयः । त्वा । वहन्ति ।
तिरः । समुद्रम् । अति । रोचसे । अर्णवम् ॥ ३६ ॥

रोहिते द्यावापृथिवी अधि श्रिते वसुजिति गोजिति संधनाजिति ।
सहस्रं यस्य जनिमानि सप्त च वोचेयं ते नाभिं भुवनस्याधि मज्मनि ॥ ३७ ॥

रोहिते । द्यावापृथिवी इति । अधि । श्रिते इति । वसुऽजिति । गोऽजिति । संधनऽजिति । सहस्रम् । यस्य । जनिमानि । सप्त । च । वोचेयम् । ते । नाभिम् । भुवनस्य । अधि । मज्मनि ॥ ३७ ॥

यशा यासि प्रदिशो दिशश्च यशाः पशूनामुत चर्षणीनाम् ।
यशाः पृथिव्या अदित्या उपस्थेहं भूयासं सवितेव चारुः ॥ ३८ ॥

यशाः । यासि । प्रऽदिशः । दिशः । च । यशाः । पशूनाम् । उत । चर्षणीनाम् ।
यशाः । पृथिव्याः । अदित्याः । उपऽस्थे । अहम् । भूयासम् । सविताऽइव । चारुः ॥ ३८ ॥

अमुत्र सन्निह वेत्थेतः संस्तानि पश्यसि ।
इतः पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ॥ ३९ ॥

अमुत्र । सन् । इह । वेत्थ । इतः । सन् । तानि । पश्यसि ।
इतः । पश्यन्ति । रोचनम् । दिवि । सूर्यम् । विपःऽचितम् ॥ ३९ ॥

---

१ B B^h C D S^m Cs ३ for १. We with A K K^m V Dc. २ A R S^m रोचसे अर्णवम्. ३ B D E R S^m Cs P P^2 J Cp मय्मनि. We with C Dc

देवो देवान् मर्चयस्यन्तश्चरस्यर्णवे।
समानमग्निमिन्धते तं विदुः कवयः परे ॥ ४० ॥ (४)

देवः। देवान्। मर्चयसि। अन्तः। चरसि। अर्णवे।
समानम्। अग्निम्। इन्धते। तम्। विदुः। कवयः। परे ॥ ४० ॥ (४)

अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात्।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अस्मिन् ॥४१॥

अवः। परेण। परः। एना। अवरेण। पदा। वत्सम्। बिभ्रती। गौः। उत्। अस्थात्।
सा। कद्रीची। कम्। स्वित्। अर्धम्। परा। अगात्। क्व। स्वित्। सूते। नहि। यूथे।
अस्मिन् ॥ ४१ ॥

एकपदी द्विपदी सा चतुष्पद्यष्टापदी नवपदी बभूवुषी।
सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः समुद्रा अधि वि क्षरन्ति ॥ ४२ ॥

एकऽपदी। द्विऽपदी। सा। चतुःऽपदी। अष्टाऽपदी। नवऽपदी। बभूवुषी।
सहस्रऽअक्षरा। भुवनस्य। पङ्क्तिः। तस्याः। समुद्राः। अधि। वि। क्षरन्ति ॥ ४२ ॥

आरोहन् द्याममृतः प्राव मे वचः।
उत् त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा वहन्ति ॥ ४३ ॥

आऽरोहन्[1]। द्याम्। अमृतः। प्र। अव[2]। मे। वचः।
उत्। त्वा। यज्ञाः। ब्रह्मऽपूताः। वहन्ति। अध्वऽगतः। हरयः। त्वा। वहन्ति ॥ ४३ ॥

वेद तत् ते अमर्त्य यत् त आक्रमणं दिवि।
यत् ते सधस्थं परमे व्योमन् ॥ ४४ ॥

वेद। तत्। ते। अमर्त्य। यत्। ते। आऽक्रमणम्। दिवि।
यत्। ते। सधऽस्थम्। परमे। विऽओमन् ॥ ४४ ॥

सूर्यो द्यां सूर्यः पृथिवीं सूर्य आपोऽति पश्यति।
सूर्यो भूतस्यैकं चक्षुरा रुरोह दिवं महीम् ॥ ४५ ॥

सूर्यः। द्याम्। सूर्यः। पृथिवीम्। सूर्यः। आपः। अति। पश्यति।
सूर्यः। भूतस्य। एकम्। चक्षुः। आ। रुरोह। दिवम्। महीम् ॥ ४५ ॥

---

१ J आऽरोहम्। २ P J Cp अर्व। We with P[2]

उर्वीरासन् परिधयो वेदिर्भूमिरकल्पत ।
तत्रैतावग्नी आधत्त हिमं घ्रंसं च रोहितः ॥ ४६ ॥

उर्वीः । आसन् । परिऽधयः । वेदिः । भूमिः । अकल्पत ।
तत्र । एतौ । अग्नी इति । आ । अधत्त । हिमम् । घ्रंसम् । च । रोहितः ॥ ४६ ॥

हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् ।
वर्षाज्यावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ४७ ॥

हिमम् । घ्रंसम् । च । आऽधाय । यूपान् । कृत्वा । पर्वतान् ।
वर्षऽआज्यौ । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ४७ ॥

स्वर्विदो रोहितस्य ब्रह्मणाग्निः समिध्यते ।
तस्माद् घ्रंसस्तस्माद्धिमस्तस्माद् यज्ञोजायत[1] ॥ ४८ ॥

स्वःऽविदः । रोहितस्य । ब्रह्मणा । अग्निः । सम् । इध्यते ।
तस्मात् । घ्रंसः । तस्मात् । हिमः । तस्मात् । यज्ञः । अजायत ॥ ४८ ॥

ब्रह्मणाग्नी वावृधानौ ब्रह्मवृद्धौ ब्रह्माहुतौ ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ४९ ॥

ब्रह्मणा । अग्नी इति । ववृधानौ । ब्रह्मऽवृद्धौ । ब्रह्मऽआहुतौ ।
ब्रह्मऽइद्धौ[2] । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ४९ ॥

सत्ये अन्यः समाहितोप्स्व[3]न्यः समिध्यते ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ५० ॥(५)

सत्ये । अन्यः । सम्ऽआहितः । अप्ऽसु । अन्यः । सम् । इध्यते ।० ॥ ५० ॥(५)

यं वातः परि शुम्भति यं वेन्द्रो ब्रह्मणस्पतिः ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ५१ ॥

यम् । वातः । परिऽशुम्भति । यम् । वा । इन्द्रः । ब्रह्मणः । पतिः ।
ब्रह्मऽइद्धौ[4] । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ५१ ॥

वेदिं भूमिं कल्पयित्वा दिवं कृत्वा दक्षिणाम् ।

---

१ E यज्ञोजायत. २ P Cp ब्रह्मऽइधौ ।. We with P̊² J. ३ B B̊ʰ C E ३ for १. ४ P ब्रह्मइधौ ।. Cp ब्रह्मऽइधौ ।.

घ्रंसं तद॒ग्निं कृ॒त्वा च॒कार॒ विश्व॑मात्म॒न्वद् व॒र्षेणा॒ज्येन॒ रोहि॑तः ॥ ५२ ॥

वेदि॑म् । भूमि॑म् । क॒ल्प॒यि॒त्वा । दिव॑म् । कृ॒त्वा । द॒क्षिणा॑म् ।

घ्रंस॑म् । तत् । अ॒ग्निम् । कृ॒त्वा । च॒कार॑ । विश्व॑म् । आ॒त्मन्ऽव॑त् । व॒र्षेण॑ । आ॒ज्येन॑ । रोहि॑तः ॥ ५२ ॥

व॒र्षमा॒ज्यं घ्रंसो अ॒ग्निर्वेदि॒र्भूमि॑रकल्पत ।

तत्रै॒तान् पर्व॑ताना॒ग्निर्गी॒र्भिरू॒र्ध्वाँ अ॑कल्पयत् ॥ ५३ ॥

व॒र्षम् । आ॒ज्य॑म् । घ्रंसः । अ॒ग्निः । वेदिः॑ । भूमिः॑ । अ॒क॒ल्प॒त॒ ।

तत्र॑ । ए॒तान् । पर्व॑तान् । अ॒ग्निः । गीः॒ऽभिः । ऊ॒र्ध्वान् । अ॒क॒ल्प॒य॒त् ॥ ५३ ॥

गी॒र्भिरू॒र्ध्वान् क॑ल्पयि॒त्वा रोहि॑तो॒ भूमि॑मब्रवीत् ।

त्वयी॒दं सर्वं॑ जायतां॒ यद् भू॒तं यच्च॑ भा॒व्य॒म् ॥ ५४ ॥

गीः॒ऽभिः । ऊ॒र्ध्वान् । क॒ल्प॒यि॒त्वा । रोहि॑तः । भूमि॑म् । अ॒ब्र॒वी॒त् ।

त्वयि॑ । इ॒दम् । सर्व॑म् । जा॒य॒ता॒म् । यत् । भू॒तम् । यत् । च॒ । भा॒व्य॒म् ॥ ५४ ॥

स य॒ज्ञः प्र॑थ॒मो भू॒तो भव्यो॑ अजायत ।

तस्मा॑द्ध ज॒ज्ञ इ॒दं सर्वं॒ यत् किं चे॒दं वि॒रोच॑ते॒ रोहि॑तेन॒ ऋषि॒णाभृ॑तम् ॥ ५५ ॥

सः । य॒ज्ञः । प्र॒थ॒मः । भू॒तः । भव्यः॑ । अ॒जा॒य॒त॒ ।

तस्मा॑त् । ह॒ । ज॒ज्ञे । इ॒दम् । सर्व॑म् । यत् । किम् । च॒ । इ॒दम् । वि॒ऽरोच॑ते । रोहि॑तेन । ऋषि॑णा । आऽभृ॑तम् ॥ ५५ ॥

यश्च॒ गां प॒दा स्फुर॑ति प्र॒त्यङ् सूर्यं॑ च॒ मेह॑ति ।

तस्य॑ वृश्चामि ते॒ मूलं॒ न च्छा॒यां क॑र॒वोऽप॑रम् ॥ ५६ ॥

यः । च॒ । गाम् । प॒दा । स्फुर॑ति । प्र॒त्यङ् । सूर्य॑म् । च॒ । मेह॑ति ।

तस्य॑ । वृ॒श्चा॒मि॒ । ते॒ । मूल॑म् । न । छा॒याम् । क॒र॒वः॒ । अप॑रम् ॥ ५६ ॥

यो मा॑भिच्छा॒यम॒त्येषि॑ मां चा॒ग्निं चा॒न्त॒रा ।

तस्य॑ वृश्चामि ते॒ मूलं॒ न च्छा॒यां क॑र॒वोऽप॑रम् ॥ ५७ ॥

यः । मा॒ । अ॒भि॒ऽछा॒यम् । अ॒ति॒ऽएषि॑ । माम् । च॒ । अ॒ग्निम् । च॒ । अ॒न्त॒रा ।

---

१ P च॒कर॑ । २ D यच्च भाव्यम्. ३ A B^h D S^m C^s यज्ञ. ४ P ऋषीणा । ५ K °त्येति.

तस्य । वृश्चामि । ते । मूलम् । न । छायाम् । करवः । अपरम् ॥ ५७ ॥

**यो अद्य देव सूर्य त्वां च मां चान्तरायति ।**
**दुष्वप्न्यं तस्मिञ्छमलं दुरितानि च मृज्महे ॥ ५८ ॥**

यः । अद्य । देव । सूर्य । त्वाम् । च । माम् । च । अन्तरा । अयति ।
दुःऽस्वप्न्यम् । तस्मिन् । शमलम् । दुःऽइतानि । च । मृज्महे ॥ ५८ ॥

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।**
**मान्त स्थुर्नो अरातयः ॥ ५९ ॥**

मा । प्र । गाम । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः ।
मा । अन्तः । स्थुः । नः । अरातयः ॥ ५९ ॥

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः ।**
**तमाहुतमशीमहि ॥ ६० ॥ (६)**

यः । यज्ञस्य । प्रऽसाधनः । तन्तुः । देवेषु । आऽततः ।
तम् । आऽहुतम् । अशीमहि ॥ ६० ॥ (६)

प्रथमेनुवाके प्रथमं सूक्तम् ॥

इति प्रथमोनुवाकः ॥

"उदस्य केतवः" इति सवितृदेवताकम् ॥

याज्ञिका वक्ष्यमाणप्रकारेण विनियुञ्जन्ति ।

"उदस्य केतवः" इत्यनुवाकस्य सलिलगणे पाठः । अतस्तस्य गणप्रयुक्तो विनियोगो द्रष्टव्यः [ १.५ ] ॥

तथा उपनयने आयुरभिवृद्ध्यर्थम् अनेनानुवाकेन माणवकस्त्रिकालम् आदित्यम् उपतिष्ठेत । सूत्रितं हि । "उदस्य केतवः [ १३.२ ] मूर्धाहम् [ १६.३ ] विषासहिम् [ १७.१ ] इत्युद्यन्तम् उपतिष्ठते मध्यंदिनेऽस्तं यन्तम्" इति । कौ० ७.९ ॥

तथा चातुर्मास्ये साकमेधपर्वणि पित्र्येष्टौ जातायाम् आदित्योपस्थाने इदं विनियुक्तम् । तद् उक्तं वैताने । "प्राञ्चोऽभ्युत्क्रम्योदस्य केतव इत्यादित्यमुपतिष्ठन्ते" इति । वै० २.५ ॥

**उदस्य केतवो दिवि शुक्रा भ्राजन्त ईरते ।**
**आदित्यस्य नृचक्षसो महिव्रतस्य मीढुषः ॥ १ ॥**

उत् । अस्य । केतवः । दिवि । शुक्राः । भ्राजन्तः । ईरते ।
आदित्यस्य । नृऽचक्षसः । महिऽव्रतस्य । मीढुषः ॥ १ ॥

---

१ P Cp करवः ।. We with P² J. २ B दुःष्वप्न्यं. ३ B C D E R S^m C^s मृग्महे. P P² J Cp मृग्महे ।. We with Dc. ४ P गाम ।. ५ A B E R Dc P² J मीडुषः.

दिशां प्रज्ञानां[1] स्वरयन्तमर्चिषा सुपक्षमाशुं पतयन्तमर्णवे ।
स्तवाम सूर्यं भुवनस्य गोपां यो रश्मिभिर्दिश आभाति सर्वाः ॥ २ ॥

दिशाम् । प्रऽज्ञानाम् । स्वरयन्तम् । अर्चिषा । सुऽपक्षम् । आशुम् । पतयन्तम् । अर्णवे ।
स्तवाम । सूर्यम् । भुवनस्य । गोपाम् । यः । रश्मिऽभिः[2] । दिशः । आऽभाति । सर्वाः ॥ २ ॥

यत् प्राङ् प्रत्यङ् स्वधया यासि शीभं नानारूपे अहनी कर्षि मायया ।
तदादित्य महि तत् ते महि श्रवो यदेको विश्वं परि भूम जायसे ॥ ३ ॥

यत् । प्राङ् । प्रत्यङ् । स्वधया । यासि । शीभम् । नानारूपे इति नानाऽरूपे । अहनी
इति । कर्षि । मायया ।
तत् । आदित्य । महि । तत् । ते । महि । श्रवः । यत् । एकः । विश्वम् । परि । भूम[3] ।
जायसे ॥ ३ ॥

विपश्चितं तरणिं भ्राजमानं वहन्ति यं हरितः सप्त बह्वीः ।
स्रुताद्[4] यमत्त्रिर्दिवमुन्निनाय तं त्वा पश्यन्ति परियान्तमाजिम् ॥ ४ ॥

विपःऽचितम् । तरणिम् । भ्राजमानम् । वहन्ति । यम् । हरितः । सप्त । बह्वीः ।
स्रुतात्[4] । यम् । अत्त्रिः । दिवम् । उत्ऽनिनाय । तम् । त्वा । पश्यन्ति । परिऽयान्तम् ।
आजिम् ॥ ४ ॥

मा त्वा दभन् परियान्तमाजिं स्वस्ति दुर्गाँ अति याहि शीभम् ।
दिवं च सूर्य पृथिवीं च देवीमहोरात्रे विमिमानो यदेषि ॥ ५ ॥

मा । त्वा । दभन् । परिऽयान्तम् । आजिम् । स्वस्ति । दुःऽगान् । अति । याहि । शीभम् ।
दिवम् । च । सूर्य । पृथिवीम् । च । देवीम् । अहोरात्रे इति । विऽमिमानः । यत् । एषि ॥५॥

स्वस्ति ते सूर्य चरसे रथाय येनोभावन्तौ[5] परियासि सद्यः ।
यं ते वहन्ति हरितो वहिष्ठाः[6] शतमश्वा यदि वा सप्त बह्वीः ॥ ६ ॥

स्वस्ति । ते । सूर्य । चरसे । रथाय । येन । उभौ । अन्तौ । परिऽयासि । सद्यः ।
यम् । ते । वहन्ति । हरितः । वहिष्ठाः[6] । शतम् । अश्वाः । यदि । वा । सप्त । बह्वीः ॥ ६ ॥

---

१ K K^m S^m V प्रज्ञानं. Dc प्रज्ञानां changed to प्रज्ञानं. P^2 प्रऽज्ञानम् ।. २ P रश्मि॰ ।. ३ P भूम ।. ४ A B B^h C D E K K^m R S^m V Dc P P^2 J Cp स्तुता॰. But A B^h E R S^m P may be स्रुता॰. Cs स्रुता॰. ५ B E ॰भावंतौ. ६ All our authorities have वहिष्टाः.

सुखं सूर्य रथमंशुमन्तं स्योनं सुवह्निमधि तिष्ठ वाजिनम् ।
यं ते वहन्ति हरितो वहिष्ठाः शतमश्वा यदि वा सप्त बह्वीः ॥ ७ ॥

सुऽखम् । सूर्य[1] । रथम् । अंशुऽमन्तम् । स्योनम् । सुऽवह्निम् । अधि । तिष्ठ । वाजिनम् ।
यम् । ते । वहन्ति । हरितः । वहिष्ठाः[3] । शतम् । अश्वाः । यदि । वा । सप्त । बह्वीः ॥ ७ ॥

सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीरयुक्त ।
अमोचि शुक्रो रजसः परस्ताद् विधूय देवस्तमो दिवमारुहत् ॥ ८ ॥

सप्त । सूर्यः । हरितः । यातवे । रथे । हिरण्यऽत्वचसः । बृहतीः । अयुक्त ।
अमोचि । शुक्रः । रजसः । परस्तात् । विऽधूय । देवः । तमः । दिवम् । आ । अरुहत् ॥ ८ ॥

उत केतुना बृहता देव आगन्नपावृक् तमोभि ज्योतिरश्रैत् ।
दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भुवनानि विश्वा ॥ ९ ॥

उत । केतुना । बृहता । देवः । आ । अगन् । अप[4] । अवृक्[5] । तमः । अभि । ज्योतिः ।
अश्रैत् ।
दिव्यः । सुऽपर्णः । सः । वीरः । वि । अख्यत् । अदितेः । पुत्रः । भुवनानि । विश्वा ॥ ९ ॥

उद्यन् रश्मीना[6] तनुषे विश्वा रूपाणि पुष्यसि ।
उभा समुद्रौ क्रतुना वि भासि सर्वांल्लोकान् परिभूर्भ्राजमानः ॥१०॥ (७)

उत्ऽयन् । रश्मीन् । आ । तनुषे । विश्वा । रूपाणि । पुष्यसि ।
उभा । समुद्रौ । क्रतुना । वि । भासि । सर्वान् । लोकान् । परिऽभूः । भ्राजमानः ॥ १० ॥ (७)

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोर्णवम्[7] ।
विश्वान्यो भुवना विचष्टे हैरण्यैरन्यं[8] हरितो वहन्ति ॥ ११ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । हैरण्यैः । अन्यम् । हरितः । वहन्ति ॥ ११ ॥

दिवि त्वात्त्रिरधारयत्[9] सूर्या[10] मासाय कर्तवे ।

---

१ A B C D E K K^m R S^m V Dc Cs सूर्य. P P^2 J सूर्यै ।. Cp सूर्यम् ।. The emendation made by Rw to सूर्य appears desirable. २ B^h सुवर्णमधि. ३ All our authorities have वहिष्ठाः. ४ P अपः ।. ५ P अवृक् ।. ६ B B^h S^m उद्यन्रश्मीना. ७ A B यातो अर्णवम्. ८ A B E °रण्यं. ९ B °धारयत्°. १० So we with all our authorities. See Rw

स एषि सुधृतस्तपन् विश्वा भूतावचाकशत् ॥ १२ ॥

दिवि । त्वा । अत्रिः । अधारयत् । सूर्या[1] । मासाय । कर्तवे ।

सः । एषि । सुऽधृतः । तपन् । विश्वा । भूता । अवऽचाकशत् ॥ १२ ॥

उभावन्तौ समर्षसि वत्सः संमातराविव ।

नन्वे[2]तदितः पुरा ब्रह्म देवा अमी विदुः ॥ १३ ॥

उभौ । अन्तौ । सम् । अर्षसि । वत्सः । संमातरौऽइव ।

ननु । एतत् । इतः । पुरा । ब्रह्म । देवाः । अमी इति । विदुः[3] ॥ १३ ॥

यत् संमुद्रमनु श्रितं तत् सिषासति सूर्यः ।

अध्वास्य विततो महान् पूर्वश्चापरश्च यः ॥ १४ ॥

यत् । समुद्रम् । अनु । श्रितम् । तत् । सिषासति । सूर्यः ।

अध्वा । अस्य । विऽततः । महान् । पूर्वः । च । अपरः । च । यः ॥ १४ ॥

तं समाप्नोति जूतिभिस्ततो नाप चिकित्सति ।

तेनामृतस्य भक्षं देवानां नाव रुन्धते ॥ १५ ॥

तम् । सम् । आप्नोति । जूतिऽभिः । ततः । न । अप । चिकित्सति ।

तेन । अमृतस्य । भक्षम् । देवानाम् । न । अव । रुन्धते ॥ १५ ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्यम् ॥ १६ ॥

उत् । ऊं इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः ।

दृशे । विश्वाय । सूर्यम् ॥ १६ ॥

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।

सूराय विश्वचक्षसे ॥ १७ ॥

अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः ।

सूराय । विश्वऽचक्षसे ॥ १७ ॥

अदृश्रन्नस्य केतवो वि रश्मयो जनाँ[4] अनु ।

---

१ P P[2] J Cp सूर्या । २ A १ for ३. ३ P विदुः । ४ E R जनैं.

भ्राजन्तो अग्नयो यथा ॥ १८ ॥

अदृश्रन् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु ।
भ्राजन्तः । अग्नयः । यथा ॥ १८ ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमा भासि रोचन ॥ १९ ॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य ।
विश्वम् । आ । भासि । रोचन ॥ १९ ॥

प्रत्यङ् देवाना विशः प्रत्यङ्ङुदेषि मानुषीः ।
प्रत्यङ् विश्वं स्वर्दृशे ॥ २० ॥ (८)

प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषीः ।
प्रत्यङ् । विश्वम् । स्वः । दृशे ॥ २० ॥ (८)

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥ २१ ॥

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु ।
त्वम् । वरुण । पश्यसि ॥ २१ ॥

वि द्यामेषि रजस्पृथ्वहर्मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥ २२ ॥

वि । द्याम् । एषि । रजः । पृथु । अहः । मिमानः । अक्तुऽभिः ।
पश्यन् । जन्मानि । सूर्य ॥ २२ ॥

सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षणम् ॥ २३ ॥

सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य ।
शोचिःऽकेशम् । विऽचक्षणम् ॥ २३ ॥

---

१ B B^h C D E Cs ज्योतिःकृदसि. २ B^h C D E R S^m प्रत्यङुदेषि. K^m °गुदेषि. We with V Dc Cs. ३ E R जनैं. ४ A E K R Dc पश्यं. ५ A B D S^m Cs शोचिःकेशं

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ २४ ॥

अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः ।
ताभिः । याति । स्वयुक्तिऽभिः ॥ २४ ॥

रोहितो दिवमारुहत् तपसा तपस्वी ।
स योनिमैति स उ जायते पुनः स देवानामधिपतिर्बभूव ॥ २५ ॥

रोहितः । दिवम् । आ । अरुहत् । तपसा । तपस्वी ।
सः । योनिम् । आ । एति । सः । ऊं इति । जायते । पुनः । सः । देवानाम् । अधिऽपतिः । बभूव ॥ २५ ॥

यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वतस्पृथः ।
सं बाहुभ्यां भरति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ २६ ॥

यः । विश्वऽचर्षणिः । उत । विश्वतःऽमुखः । यः । विश्वतःऽपाणिः । उत । विश्वतःऽपृथः ।
सम् । बाहुऽभ्याम् । भरति । सम् । पतत्रैः । द्यावापृथिवी इति । जनयन् । देवः । एकः ॥ २६ ॥

एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
द्विपाद्ध षट्पदो भूयो वि चक्रमे त एकपदस्तन्वं[1] समासते ॥ २७ ॥

एकऽपात् । द्विऽपदः । भूयः । वि । चक्रमे । द्विऽपात् । त्रिऽपादम् । अभि । एति । पश्चात् ।
द्विऽपात् । ह । षट्ऽपदः । भूयः । वि । चक्रमे । ते । एकऽपदः । तन्वम् । सम् । आसते ॥ २७ ॥

अतन्द्रो यास्यन् हरितो यदास्थाद् द्वे रूपे कृणुते रोचमानः ।
केतुमानुद्यन्त्सहमानो रजांसि विश्वा आदित्य प्रवतो वि भासि ॥ २८ ॥

अतन्द्रः । यास्यन् । हरितः । यत् । आऽअस्थात् । द्वे इति । रूपे इति । कृणुते । रोचमानः ।
केतुऽमान् । उत्ऽयन् । सहमानः । रजांसि । विश्वाः । आदित्य । प्रऽवतः । वि । भासि ॥ २८ ॥

बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महांस्ते महतो महिमा त्वमादित्य महाँ असि ॥ २९ ॥

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि ।
महान् । ते । महतः । महिमा । त्वम् । आदित्य । महान् । असि ॥ २९ ॥

---

१ R °पृथिवी. २ ABBhCE ३ for १. ३ R °स्थान्द्वे. ४ ER बण्महें. ५ E महें.

रोचसे दिवि रोचसे अन्तरिक्षे पतङ्ग पृथिव्यां रोचसे रोचसे अप्स्व१न्तः।
उभा समुद्रौ रुच्या व्यापिथ देवो देवासि महिषः स्वर्जित् ॥ ३० ॥ (९)

रोचसे। दिवि। रोचसे। अन्तरिक्षे। पतङ्ग। पृथिव्याम्। रोचसे। रोचसे। अप्ऽसु। अन्तः।
उभा। समुद्रौ। रुच्या। वि। आपिथ। देवः। देव। असि। महिषः। स्वःऽजित् ॥ ३० ॥ (९)

अर्वाङ् परस्तात् प्रयतो व्यध्व आशुर्विपश्चित् पतयन् पतङ्गः।
विष्णुर्विचित्तः शवसाधितिष्ठन् प्र केतुना सहते विश्वमेजत् ॥ ३१ ॥

अर्वाङ्। परस्तात्। प्रऽयतः। विऽअध्वे। आशुः। विपःऽचित्। पतयन्। पतङ्गः।
विष्णुः। विऽचित्तः। शवसा। अधिऽतिष्ठन्। प्र। केतुना। सहते। विश्वम्। एजत् ॥ ३१ ॥

चित्रश्चिकित्वान् महिषः सुपर्ण आरोचयन् रोदसी अन्तरिक्षम्।
अहोरात्रे परि सूर्यं वसाने प्रास्य विश्वा तिरतो वीर्याणि ॥ ३२ ॥

चित्रः। चिकित्वान्। महिषः। सुऽपर्णः। आऽरोचयन्। रोदसी इति। अन्तरिक्षम्।
अहोरात्रे इति। परि। सूर्यम्। वसाने इति। प्र। अस्य। विश्वा। तिरतः। वीर्याणि ॥ ३२ ॥

तिग्मो विभ्राजन् तन्व१ं शिशानोरंगमासः प्रवतो रराणः।
ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आस्थात् प्रदिशः कल्पमानः ॥ ३३ ॥

तिग्मः। विऽभ्राजन्। तन्वम्। शिशानः। अरम्ऽगमासः। प्रऽवतः। रराणः।
ज्योतिष्मान्। पक्षी। महिषः। वयःऽधाः। विश्वाः। आ। अस्थात्। प्रऽदिशः। कल्पमानः ॥ ३३ ॥

चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन्।
दिवाकरोति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥ ३४ ॥

चित्रम्। देवानाम्। केतुः। अनीकम्। ज्योतिष्मान्। प्रऽदिशः। सूर्यः। उत्ऽयन्।
दिवाऽकरः। अति। द्युम्नैः। तमांसि। विश्वा। अतारीत्। दुःऽइतानि। शुक्रः ॥ ३४ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।

---

१ R दिवि रोचसे. २ A B^h C E R ३ for १. ३ D E Cs व्यापिथ. ४ B B^h C D E S^m Cs ३ for १. We with K K^m R V Dc. ५ B^h °नोअरंग°. ६ B Cs अस्थात्.

आप्राद् द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ ३५ ॥

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ।
आ । अप्रात् । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥ ३५ ॥

उच्चा पतन्तमरुणं सुपर्णं मध्ये दिवस्तरणिं भ्राजमानम् ।
पश्याम त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्ददत्त्रिः ॥ ३६ ॥

उच्चा । पतन्तम् । अरुणम् । सुऽपर्णम् । मध्ये । दिवः । तरणिम् । भ्राजमानम् ।
पश्याम । त्वा । सवितारम् । यम् । आहुः । अजस्रम् । ज्योतिः । यत् । अविन्दत् । अत्त्रिः ॥ ३६ ॥

दिवस्पृष्ठे धावमानं सुपर्णमदित्याः पुत्रं नाथकाम उप यामि भीतः ।
स नः सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ॥ ३७ ॥

दिवः । पृष्ठे । धावमानम् । सुऽपर्णम् । अदित्याः[2] । पुत्रम् । नाथऽकामः । उप । यामि । भीतः ।
सः । नः । सूर्य । प्र । तिर । दीर्घम् । आयुः । मा । रिषाम । सुऽमतौ । ते । स्याम ॥ ३७ ॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥ ३८ ॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥ ३८ ॥

रोहितः कालो अभवद् रोहितोग्रे प्रजापतिः ।
रोहितो यज्ञानां मुखं रोहितः[3] स्व[4]रा[1]भरत्[5] ॥ ३९ ॥

रोहितः । कालः । अभवत् । रोहितः । अग्रे । प्रजाऽपतिः ।
रोहितः । यज्ञानाम् । मुखम् । रोहितः । स्वः । आ । अभरत्[6] ॥ ३९ ॥

रोहितो लोको अभवद् रोहितोत्यतपद् दिवम् ।
रोहितो रश्मिभिर्भूमिं समुद्रमनु सं चरत् ॥ ४० ॥ (१०)

रोहितः । लोकः । अभवत् । रोहितः । अति । अतपत् । दिवम् ।
रोहितः । रश्मिऽभिः । भूमिम् । समुद्रम् । अनु । सम् । चरत् ॥ ४० ॥ (१०)

---

१ P उत् । . २ P आदित्याः । . ३ A D E K K̄ S̄ रोहित for रोहितः. ४ A B̄ C D Ī S̄ Cs ३ for १. We with B K K̄ V Dc. ५ R °भरन्. ६ P अभवत् । .

सर्वा दिशः समचरद् रोहितोधिपतिर्दिवः ।
दिवं समुद्रमाद् भूमिं सर्वं भूतं वि रक्षति ॥ ४१ ॥

सर्वाः । दिशः । सम् । अचरत् । रोहितः । अधिऽपतिः । दिवः ।
दिवम् । समुद्रम् । आत् । भूमिम् । सर्वम् । भूतम् । वि । रक्षति ॥ ४१ ॥

आरोहञ्छुक्रो[1] बृहतीरतन्द्रो द्वे रूपे कृणुते रोचमानः ।
चित्रश्चिकित्वान् महिषो वातमाया यावतो लोकानभि यद् वि-
भाति ॥ ४२ ॥

आऽरोहन् । शुक्रः । बृहतीः । अतन्द्रः । द्वे इति । रूपे इति । कृणुते । रोचमानः ।
चित्रः । चिकित्वान् । महिषः । वातम्ऽआयाः । यावतः । लोकान् । अभि । यत् ।
विऽभाति ॥ ४२ ॥

अभ्य[2]न्यदेति[3] पर्यन्यदस्यते[4]होरात्राभ्यां महिषः कल्पमानः ।
सूर्यं वयं रजसि क्षियन्तं गातुविदं हवामहे नाधमानाः ॥ ४३ ॥

अभि । अन्यत् । एति । परि । अन्यत् । अस्यते । अहोरात्राभ्याम् । महिषः । कल्पमानः ।
सूर्यम् । वयम् । रजसि । क्षियन्तम् । गातुऽविदम् । हवामहे । नाधमानाः ॥ ४३ ॥

पृथिवीप्रो महिषो नाधमानस्य गातुरदब्धचक्षुः परि विश्वं बभूव[5] ।
विश्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि[6] ॥ ४४ ॥

पृथिवीऽप्रः । महिषः । नाधमानस्य । गातुः । अदब्धऽचक्षुः । परि । विश्वम् । बभूव ।
विश्वम् । सम्ऽपश्यन् । सुऽविदत्रः । यजत्रः । इदम् । शृणोतु । यत् । अहम् । ब्रवीमि ॥ ४४ ॥

पर्यस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्यामन्तरिक्षम् ।
सर्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ॥ ४५ ॥

---

१ A B^h C E R Dc आरोहंछुक्रो. K^m °हंच्छु°. Cs °हंन्छु°. We with D K S^m V. P^2 °रोहम् ।. २ K K^m अभ्या३°. A B^h C D E R S^m Dc Cs अभ्य३°. We with V. ३ K^m °देतिं. K V °देति. P^2 पति ।. We with A B^h C D E R S^m Dc Cs P J Cp. ४ A °ते अहो°. ५ So we with A B B^h C D E R S^m Cs P J Cp. Also Rw. K K^m V Dc P^2 बभूव. We have probably to understand a यः with बभूवं. ६ B^h E ब्रवीमि.

परि । अस्य । महिमा । पृथिवीम् । समुद्रम् । ज्योतिषा । विऽभ्राजन् । परि । द्याम् । अन्तरिक्षम् ।
सर्वम् । सम्ऽपश्यन् । सुऽविदत्रः । यजत्रः । इदम् । शृणोतु । यत् । अहम् । ब्रवीमि ॥ ४५ ॥

**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।**
**यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥ ४६ ॥** (११)

अबोधि । अग्निः । सम्ऽइधा । जनानाम् । प्रति । धेनुम्ऽइव । आऽयतीम् । उषसम् ।
यह्वाःऽइव । प्र । वयाम् । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥ ४६ ॥ (११)

द्वितीयेनुवाके प्रथमं सूक्तम् ॥

इति द्वितीयोनुवाकः ॥

रोहितदेवताकम् एतत् सूक्तम् । रोहितः कश्चिद् देव उद्यत्सूर्यरूपः सूर्यस्य रोहितनामको यः प्रधानोश्वस्तद्रूपेण वा कल्पितः । तस्य परमार्थ रूप त्रयोदशचतुर्दशपञ्चदशषोडशसप्तदशाष्टादशैकोनविंशेषु मन्त्रेषु द्रष्टव्यम् ॥

सांप्रदायिकास्तु एवं विनियुञ्जन्ति । तद्यथा ।

आभिचारिके कर्मणि "य इमे द्यावापृथिवी" इत्यनुवाकेन पाशान् पदे वृश्चति विधानेन ॥

तथा तत्रैव कर्मणि अनेनानुवाकेन रक्तशालिक्षीरौदनं संपात्याभिमन्त्र्य द्वेष्याय ददाति ॥

तस्मिन्नेव कर्मणि अनेनानुवाकेन आमपात्रसोपरि द्वेष्याय हस्तप्रक्षालनं ददाति ॥

तथा तस्मिन्नेव कर्मणि अनेनानुवाकेन वृषभं संपातवन्तं कृत्वा शत्रोरभिमुखं विसृजति ॥

तथा उक्त एव कर्मणि अनेनानुवाकेन शत्रुप्रतिकृतिं मृन्मयीं कृत्वा पश्चाद् अग्नेः स्थाणौ बद्ध्वा तस्या मूर्ध्नि संपातान् आनयति ॥ "यस्मिन् षडुर्वीः पञ्च" [६] इत्यृचा उदवज्रान् प्रहरति उक्तेन विधानेन ॥ "यो अन्नादो अन्नपतिः" [७] इत्यृचा उदकम् अभिमन्त्र्य द्वेष्यं मनसा चाध्यायन्नाचामति ॥

तद् उक्तं कौशिकेन । "समिद्धो अग्निः [१३. १. २८–३२] य इमे द्यावापृथिवी [१३. ३] अजैष्म [१६. ६] इत्य-"धिपाशान् आदधाति । पदेपदे पाशान् वृश्चति । अधिपाशान् बाधकां छङ्कूंस्तान् संक्षुद्य संनह्य अग्रेभ्यसति । अशिशिषे क्षी-"रौदनादीनि त्रीणि । गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्रं संपातान् अभ्यातिनयति । षष्ठ्योदवज्रान् प्रहरति । "सप्तम्याचामति" इति [कौ° ६. ३] ॥

**य इमे द्यावापृथिवी जजान यो द्रापिं कृत्वा भुवनानि वस्ते ।**
**यस्मिन् क्षियन्ति प्रदिशः षडुर्वीर्याः पतङ्गो अनु विचाकशीति[३]**
**तस्य देवस्य[३] । क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।**
**उद् वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥ १ ॥**

यः । इमे इति । द्यावापृथिवी इति । जजान । यः । द्रापिम् । कृत्वा । भुवनानि । वस्ते ।

१ P has सम् । २ P उषासम् । ३ The division into avasânas which we adopt in this and the following verses is based on A B B^h C D E K K^m R S^m V Dc Cs P P^2 J. See Rw.

यस्मिन् । क्षियन्ति । प्रऽदिशः । षट् । उर्वीः । याः । पतङ्गः । अनु । विऽचाकशीति । तस्य । देवस्य ॥ क्रुद्धस्य । एतत् । आगः । यः । एवम् । विद्वांसम् । ब्राह्मणम् । जिनाति । उत् । वेपय । रोहित । प्र । क्षिणीहि । ब्रह्मऽज्यस्य । प्रति । मुञ्च । पाशान् ॥ १ ॥

**यस्माद् वाता ऋतुथा पवन्ते यस्मात् समुद्रा अधि विक्षरन्ति**
**तस्य देवस्य ।०।० ॥ २ ॥**

यस्मात् । वाताः[1] । ऋतुऽथा । पवन्ते । यस्मात् । समुद्राः । अधि । विऽक्षरन्ति ।
तस्य ।० ॥ २ ॥

**यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा**
**तस्य०।०।० ॥ ३ ॥**

यः । मारयति । प्राणयति । यस्मात् । प्राणन्ति । भुवनानि । विश्वा ।
तस्य ।० ॥ ३ ॥

**यः प्राणेन द्यावापृथिवी तर्पयत्यपानेन समुद्रस्य जठरं यः पिपर्ति**
**तस्य०।०।० ॥ ४ ॥**

यः । प्राणेन । द्यावापृथिवी इति । तर्पयति । अपानेन । समुद्रस्य । जठरम् । यः । पिपर्ति ।
तस्य ।० ॥ ४ ॥

**यस्मिन् विराट् परमेष्ठी प्रजापतिरग्निर्वैश्वानरः सह पङ्क्त्या श्रितः ।**
**यः परस्य प्राणं परमस्य तेज आददे**
**तस्य०।०।० ॥ ५ ॥**

यस्मिन् । विऽराट् । परमेऽस्थी । प्रजाऽपतिः । अग्निः । वैश्वानरः । सह । पङ्क्त्या । श्रितः ।
यः । परस्य । प्राणम् । परमस्य । तेजः । आऽददे ।
तस्य ।० ॥ ५ ॥

**यस्मिन् षडुर्वीः पञ्च दिशो अधि श्रिताश्चतस्र आपो यज्ञस्य त्रयोक्षराः[2] ।**
**यो अन्तरा रोदसी क्रुद्धश्चक्षुषैक्षत**
**तस्य०।०।० ॥ ६ ॥**

यस्मिन् । षट् । उर्वीः । पञ्च । दिशः । अधि । श्रिताः । चतस्रः । आपः । यज्ञस्य । त्रयः । अक्षराः ।

---

१ P वातः ।. २ All our authorities read त्रयोक्षरा ।.

यः । अन्तरा । रोदसी इति । क्रुद्धः । चक्षुषा । ऐक्षत ।

तस्य ।० ॥ ६ ॥

योऽन्नादो अन्नपतिर्बभूव ब्रह्मणस्पतिरुत यः ।

भूतो भविष्यद् भुवनस्य यस्पतिस्-

तस्य०।०।० ॥ ७ ॥

यः । अन्नऽअदः । अन्नऽपतिः । बभूव । ब्रह्मणः । पतिः । उत । यः ।

भूतः । भविष्यत् । भुवनस्य । यः । पतिः ।

तस्य ।० ॥ ७ ॥

अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते

तस्य०।०।० ॥ ८ ॥

अहोरात्रैः । विऽमितम् । त्रिंशत्ऽअङ्गम् । त्रयःऽदशम् । मासम् । यः । निःऽमिमीते ।

तस्य ।० ॥ ८ ॥

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत् पतन्ति ।

त आववृत्रन्त्सदनादृतस्य

तस्य०।०।० ॥ ९ ॥

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।

ते । आ । अववृत्रन् । सदनात् । ऋतस्य ।

तस्य ।० ॥ ९ ॥

यत् ते चन्द्रं कश्यप रोचनावद् यत् संहितं पुष्कलं चित्रभानु ।

यस्मिन्त्सूर्या आर्पिताः सप्त साकं

तस्य०।०।० ॥ १० ॥ (१२)

यत् । ते । चन्द्रम् । कश्यप । रोचनऽवत् । यत् । सम्ऽहितम् । पुष्कलम् । चित्रऽभानु ।

यस्मिन् । सूर्याः । आर्पिताः । सप्त । साकम् ।

तस्य ।० ॥ १० ॥ (१२)

---

१ J चक्षुषा । changed to चक्षुषा ।. P[2] चक्षुषा ।. We with P Cp. २ A योन्नादो. ३ B K K[m] R V Dc omit अ°. ४ P °अदः ।. ५ P अन्नऽपतिः ।. ६ K °र्नि°. ७ P निःऽमिमी° ।. ८ K पुष्कुरं. P पुष्कलम् ।.

बृहदेनमनु वस्ते पुरस्ताद् रथंतरं प्रति गृह्णाति पश्चात् ।
ज्योतिर्वसाने सदमप्रमादं
तस्य०।०।० ॥ ११ ॥

बृहत् । एनम् । अनु । वस्ते । पुरस्तात् । रथम्ऽतरम् । प्रति । गृह्णाति । पश्चात् ।
ज्योतिः । वसाने इति । सदम् । अप्रऽमादम् ।
तस्य ।० ॥ ११ ॥

बृहदन्यतः पक्ष आसीद् रथंतरमन्यतः सबले सध्रीची ।
यद् रोहितमजनयन्त देवास्-
तस्य०।०।० ॥ १२ ॥

बृहत् । अन्यतः । पक्षः । आसीत् । रथम्ऽतरम् । अन्यतः । सबले इति सऽबले । स-
ध्रीची इति ।
यत् । रोहितम् । अजनयन्त । देवाः ।
तस्य ।० ॥ १२ ॥

स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन् ।
स सविता भूत्वान्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवं
तस्य०।०।० ॥ १३ ॥

सः । वरुणः । सायम् । अग्निः । भवति । सः । मित्रः । भवति । प्रातः । उत्ऽयन् ।
सः । सविता । भूत्वा । अन्तरिक्षेण । याति । यः । इन्द्रः । भूत्वा । तपति । मध्यतः ।
दिवम् ।
तस्य ।० ॥ १३ ॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा
तस्य०।०।० ॥ १४ ॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ।
तस्य ।० ॥ १४ ॥

अयं स देवो अप्स्व१न्तः सहस्रमूलः पुरुशाको अत्त्रिः ।
य इदं विश्वं भुवनं जजान
तस्य०।०।० ॥ १५ ॥

अयम् । सः । देवः । अप्ऽसु । अन्तः । सहस्रऽमूलः । पुरुऽशाकः । अत्त्रिः ।
यः । इदम् । विश्वम् । भुवनम् । जजान ।
तस्य ।० ॥ १५ ॥

शुक्रं वहन्ति हरयो रघुष्यदो देवं दिवि वर्चसा भ्राजमानम् ।
यस्योर्ध्वा दिवं तन्व१स्तपन्त्यर्वाङ् सुवर्णैः पटरैर्वि भाति
तस्य०।०।० ॥ १६ ॥

शुक्रम् । वहन्ति । हरयः । रघुऽस्यदः । देवम् । दिवि । वर्चसा । भ्राजमानम् ।
यस्य । ऊर्ध्वाः । दिवम् । तन्वः । तपन्ति । अर्वाङ् । सुऽवर्णैः । पटरैः । वि । भाति ।
तस्य ।० ॥ १६ ॥

येनादित्यान् हरितः संवहन्ति येन यज्ञेन बहवो यन्ति प्रजानन्तः ।
यदेकं ज्योतिर्बहुधा विभाति
तस्य०।०।० ॥ १७ ॥

येन । आदित्यान् । हरितः । सम्ऽवहन्ति । येन । यज्ञेन । बहवः । यन्ति । प्रऽजानन्तः ।
यत् । एकम् । ज्योतिः । बहुऽधा । विऽभाति ।
तस्य ।० ॥ १७ ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुस्-
तस्य०।०।० ॥ १८ ॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा ।

---

१ A B^h C E R ३ for १. We with D K K^m S^m V Dc Cs. २ K K^m V Dc अद्रिः. ३ P °मूलम् ।. ४ The MSS. read thus: K K^m V °न्वा१°; D °न्व१°; Dc °न्वा३° changed to °न्व१°; E Cs तन्वा१त°; C तन्वा३स्त°; R तन्वा३स्त°; S^m तन्वास्त°. ५ S^m यांति. ६ All our authorities read विभाति except P^2 which has विऽभाति and which we follow

त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ।
तस्य ।० ॥ १८ ॥

**अष्टधा युक्तो वहति वह्निरुग्रः पिता देवानां जनिता मतीनाम् ।**
**ऋतस्य तन्तुं मनसा मिमानः सर्वा दिशः पवते मातरिश्वा**
**तस्य०।०।० ॥ १९ ॥**

अष्टऽधा । युक्तः । वहति । वह्निः । उग्रः । पिता । देवानाम् । जनिता । मतीनाम् ।
ऋतस्य । तन्तुम् । मनसा । मिमानः । सर्वाः । दिशः । पवते । मातरिश्वा ।
तस्य ।० ॥ १९ ॥

**सम्यञ्चं तन्तुं प्रदिशो[१]ऽनु सर्वा अन्तर्गायत्र्याममृतस्य गर्भे**
**तस्य०।०।० ॥ २० ॥ (१३)**

सम्यञ्चम् । तन्तुम् । प्रऽदिशः । अनु । सर्वाः । अन्तः । गायत्र्याम्[२] । अमृतस्य । गर्भे ।
तस्य ।० ॥ २० ॥ (१३)

**निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः ।**
**विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि[३] विद्म**
**तस्य०।०।० ॥ २१ ॥**

[४]निऽम्रुचः । तिस्रः । विऽउषः । ह । तिस्रः । त्रीणि । रजांसि । [५]दिवः । अङ्ग । तिस्रः ।
विद्म । ते । अग्ने । त्रेधा । जनित्रम् । त्रेधा । देवानाम् । जनिमानि । विद्म ।
तस्य ।० ॥ २१ ॥

**वि य और्णोत् पृथिवीं जायमान आ समुद्रमदधादन्तरिक्षे**
**तस्य०।०।० ॥ २२ ॥**

वि । यः । और्णोत् । पृथिवीम् । जायमानः । आ । समुद्रम् । अदधात् । अन्तरिक्षे ।
तस्य ।० ॥ २२ ॥

**त्वमग्ने क्रतुभिः केतुभिर्हितो[६]ऽर्कः समिद्ध उदरोचथा दिवि ।**

---

१ B D प्रदिशो°. २ P गायत्र्यम् ।. ३ A S^m जनिमानि. ४ P निम्रुचः ।. ५ P दिवः ।.
६ A D S^m V Cs १ for ३. We with B^h C E K K^m Dc.

किमभ्यार्चिन्मरुतः पृश्निमातरो यद् रोहितमजनयन्त देवास्-
तस्यं०।०।० ॥ २३ ॥

त्वम् । अग्ने । क्रतुऽभिः । केतुऽभिः । हितः । अर्कः । सम्ऽइद्धः । उत् । अरोचथाः । दिवि ।
किम् । अभि । आर्चन् । मरुतः । पृश्निऽमातरः । यत् । रोहितम् । अजनयन्त । देवाः ।
तस्य ।० ॥ २३ ॥

य आत्मदा बलदा यस्य विश्वं उपासंते प्रशिषं यस्य देवाः ।
योऽ३स्येशे द्विपदो यश्चतुष्पदस्-
तस्यं०।०।० ॥ २४ ॥

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसंते । प्रऽशिषम् । यस्य । देवाः ।
यः । अस्य । ईशे । द्विऽपदः । यः । चतुःऽपदः ।
तस्य ।० ॥ २४ ॥

एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पाच्चक्रे द्विपदामभिस्वरे[२] संपश्यन् पङ्क्तिमुपतिष्ठमानस्-
तस्य देवस्य । क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद् वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥ २५ ॥

एकऽपात् । द्विऽपदः । भूयः । वि । चक्रमे । द्विऽपात् । त्रिऽपादम् । अभि । एति । पश्चात् ।
चतुःपात् । चक्रे । द्विऽपदाम् । अभिऽस्वरे । सम्ऽपश्यन् । पङ्क्तिम् । उपऽतिष्ठमानः ।
तस्य । देवस्य ॥ क्रुद्धस्य । एतत् । आगः । यः । एवम् । विद्वांसम् । ब्राह्मणम् । जिनाति ।
उत् । वेपय । रोहित । प्र । क्षिणीहि । ब्रह्मऽज्यस्य । प्रति । मुञ्च । पाशान् ॥ २५ ॥

कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोऽजायत ।
स ह द्यामधि रोहति रुहो रुरोह रोहितः ॥ २६ ॥ (१४)

कृष्णायाः । पुत्रः । अर्जुनः । रात्र्याः । वत्सः । अजायत ।
सः । ह । द्याम् । अधि । रोहति । रुहः । रुरोह । रोहितः ॥ २६ ॥ (१४)

तृतीयेऽनुवाके प्रथमं सूक्तम् ॥

इति तृतीयोऽनुवाकः ॥

---

१ K K̄ V Dc १ for ३. Cs has no kampa. We with B̊ E. २ R °मभिस्वरे.

एतदपि रोहितदेवताकम्। विनियोगस्तु "स एति" इत्यनुवाकं जपति स्वर्गकाम इति विनियोगमालायाम् ॥

स एति सविता स्वर्दिवस्पृष्ठेऽवचाकशत् ॥ १ ॥

सः। एति। सविता। स्वः। दिवः। पृष्ठे। अवऽचाकशत् ॥ १ ॥

रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥ २ ॥

रश्मिऽभिः। नभः। आऽभृतम्। महाऽइन्द्रः। एति। आऽवृतः ॥ २ ॥

स धाता स विधर्ता स वायुर्नभ उच्छ्रितम्।० ॥ ३ ॥

सः। धाता। सः। विऽधर्ता। सः। वायुः। नभः। उत्ऽश्रितम्।० ॥ ३ ॥

सोऽर्यमा स वरुणः स रुद्रः स महादेवः।० ॥ ४ ॥

सः। अर्यमा। सः। वरुणः। सः। रुद्रः। सः। महाऽदेवः।० ॥ ४ ॥

सो अग्निः स उ सूर्यः स उ एव महायमः।० ॥ ५ ॥

सः। अग्निः। सः। ऊं इति। सूर्यः। सः। ऊं इति। एव। महाऽयमः।० ॥ ५ ॥

तं वत्सा उप तिष्ठन्त्येकशीर्षाणो युता दश।० ॥ ६ ॥

तम्। वत्साः। उप। तिष्ठन्ति। एकऽशीर्षाणः। युताः। दश।० ॥ ६ ॥

पश्चात् प्राञ्च आ तन्वन्ति यदुदेति वि भासति।० ॥ ७ ॥

पश्चात्। प्राञ्चः। आ। तन्वन्ति। यत्। उत्ऽएति। वि। भासति।० ॥ ७ ॥

तस्यैष मारुतो गणः स एति शिक्याकृतः ॥ ८ ॥

तस्य। एषः। मारुतः। गणः। सः। एति। शिक्याऽकृतः ॥ ८ ॥

रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥ ९ ॥

रश्मिऽभिः। नभः। आऽभृतम्। महाऽइन्द्रः। एति। आऽवृतः ॥ ९ ॥

तस्येमे नव कोशा विष्टम्भा नवधा हिताः ॥ १० ॥

तस्य। इमे। नव। कोशाः। विष्टम्भाः। नवऽधा। हिताः ॥ १० ॥

---

१ K स्वर्दिवः पृ°. २ A B B[h] C D E K[m] R V Dc Cs °स्पृष्ठेव°. K °वः पृष्ठेव°. We with S. ३ S[m] उच्छृतं. ४ The Vaidikas repeat the line रश्मिभिर्नभ आभृतं &c. after verses 3, 4, 5, 6 and 7. D S[m] and Dc support the repetition and the other MSS. are not opposed to it, as their omission of indisputable intermediate repetition is habitual.

स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ॥ ११ ॥

सः । प्रऽजाभ्यः । वि । पश्यति । यत् । च । प्राणति । यत् । च । न ॥ ११ ॥

तमिदं निगतं सहः स एष एक एकवृदेक एव ॥ १२ ॥

तम् । इदम् । निऽगतम् । सहः । सः । एषः । एकः । एकऽवृत् । एकः । एव ॥ १२ ॥

एते अस्मिन् देवा एकवृतो भवन्ति ॥ १३ ॥ (१५)

एते । अस्मिन् । देवाः । एकऽवृतः । भवन्ति ॥ १३ ॥ (१५)

इति चतुर्थेनुवाके प्रथमं पर्यायसूक्तम् ॥

कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च ॥ १ ॥

कीर्तिः । च । यशः । च । अम्भः । च । नभः । च । ब्राह्मणऽवर्चसम् । च । अन्नम् । च ।
अन्नऽअद्यम् । च ॥ १ ॥

य एतं देवमेकवृतं वेद ॥ २ ॥

यः । एतम् । देवम् । एकऽवृतम् । वेद ॥ २ ॥

न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते ।[१]० ॥ ३ ॥

न । द्वितीयः । न । तृतीयः । चतुर्थः । न । अपि । उच्यते ।० ॥ ३ ॥

न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते ।० ॥ ४ ॥

न । पञ्चमः । न । षष्ठः । सप्तमः । न ।० ॥ ४ ॥

नाष्टमो न नवमो दशमो नाप्युच्यते ।० ॥ ५ ॥

न । अष्टमः । न । नवमः । दशमः । न । अपि । उच्यते ।० ॥ ५ ॥

स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न ।० ॥ ६ ॥

सः । सर्वस्मै । वि । पश्यति । यत् । च । प्राणति । यत् । च । न ।० ॥ ६ ॥

तमिदं निगतं सहः स एष एक एकवृदेक एव ।० ॥ ७ ॥

तम् । इदम् । निऽगतम् । सहः । सः । एषः । एकः । एकऽवृत् । एकः । एव ।० ॥ ७ ॥

---

१ The Vaidikas repeat य एतं देवमेकवृतं वेद after the following verses of this and the first verse of the next paryâya-sûkta. D and Š[m] support the repetition, and the other MSS. are not opposed to it, as they invariably omit all intermediate repetitions. २ K K[m] R V Dc नाष्टमो. We with A B B[h] C D E Š[m] Cs.

सर्वे अस्मिन् देवा एकवृतो भवन्ति ।० ॥ ८ ॥ (१६)

सर्वे । अस्मिन् । देवाः । एकऽवृतः । भवन्ति ।० ॥ ८ ॥ (१६)

इति चतुर्थेनुवाके द्वितीयं पर्यायसूक्तम् ॥

ब्रह्म च तपश्च कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चा-न्नाद्यं च ।० ॥ १ ॥

ब्रह्म । च । तपः । च । कीर्तिः । च । यशः । च । अम्भः । च । नभः । च । ब्राह्मणऽवर्च-सम् । च । अन्नम् । च । अन्नऽअद्यम् । च ।० ॥ १ ॥

भूतं च भव्यं च श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च ॥ २ ॥

भूतम् । च । भव्यम् । च । श्रद्धा । च । रुचिः । च । स्वःऽगः । च । स्वधा । च ॥ २ ॥

य एतं देवमेकवृतं वेद ॥ ३ ॥

यः । एतम् । देवम् । एकऽवृतम् । वेद ॥ ३ ॥

स एव मृत्युः सोऽमृतं सोऽभ्वं स रक्षः ॥ ४ ॥

सः । एव । मृत्युः । सः । अमृतम् । सः । अभ्वम् । सः । रक्षः ॥ ४ ॥

स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारोनु संहितः ॥ ५ ॥

सः । रुद्रः । वसुऽवनिः । वसुऽदेये नमःऽवाके । वषट्ऽकारः । अनु । सम्ऽहितः ॥ ५ ॥

तस्येमे सर्वे यातव उप प्रशिषमासते ॥ ६ ॥

तस्य । इमे । सर्वे । यातवः । उप । प्रऽशिषम् । आसते ॥ ६ ॥

तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह ॥ ७ ॥ (१७)

तस्य । अमू । सर्वा । नक्षत्रा । वशे । चन्द्रमसा । सह ॥ ७ ॥ (१७)

इति चतुर्थेनुवाके तृतीयं पर्यायसूक्तम् ॥

---

१ All our authorities have सर्वे अस्मिन्देवा, except P which has सर्वे ।. २ K च भव्यं च. B B D E K R S Cs चं भव्यं चं. P Cp भव्यम् ।. J भव्यम् changed to भव्यम् ।. We with A C V Dc P. ३ P J insert सर्वम् । च । after भव्यम् । च ।. Also P but without accents. The Saṁhitâ MSS. ( A B B C D E K K S ) and Cp omit the words. R Dc once read them (without accents) but have subsequently cancelled them. ४ A °भ्वां ३. B C D E R S Cs °भ्वं ३. We with K K V Dc. ५ P P J °वने ।. We with Cp. ६ P प्रऽशिषम् ।.

स वा अह्नोऽजायत तस्मादहरजायत ॥ १ ॥

सः। वै। अह्नः। अजायत। तस्मात्। अहः। अजायत ॥ १ ॥

स वै रात्र्या अजायत तस्माद् रात्रिरजायत ॥ २ ॥

०वै। रात्र्याः। अजायत। तस्मात्। रात्रिः। अजायत ॥ २ ॥

स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ॥ ३ ॥

०वै। अन्तरिक्षात्। अजायत। तस्मात्। अन्तरिक्षम्। अजायत ॥ ३ ॥

स वै वायोरजायत तस्माद् वायुरजायत ॥ ४ ॥

०वै। वायोः। अजायत। तस्मात्। वायुः। अजायत ॥ ४ ॥

स वै दिवोऽजायत तस्माद् द्यौरध्यजायत ॥ ५ ॥

०वै। दिवः। अजायत। तस्मात्। द्यौः। अधि। अजायत ॥ ५ ॥

स वै दिग्भ्योऽजायत तस्माद् दिशोऽजायन्त ॥ ६ ॥

०वै। दिक्ऽभ्यः। अजायत। तस्मात्। दिशः। अजायन्त ॥ ६ ॥

स वै भूमेरजायत तस्माद् भूमिरजायत ॥ ७ ॥

०वै। भूमेः। अजायत। तस्मात्। भूमिः। अजायत ॥ ७ ॥

स वा अग्नेरजायत तस्मादग्निरजायत ॥ ८ ॥

०वै। अग्नेः। अजायत। तस्मात्। अग्निः। अजायत ॥ ८ ॥

स वा अद्भ्योऽजायत तस्मादापोऽजायन्त ॥ ९ ॥

०वै। अत्ऽभ्यः। अजायत। तस्मात्। आपः। अजायन्त ॥ ९ ॥

स वा ऋग्भ्योऽजायत तस्मादृचोऽजायन्त ॥ १० ॥

०वै। ऋक्ऽभ्यः। अजायत। तस्मात्। ऋचः। अजायन्त ॥ १० ॥

स वै यज्ञादजायत तस्माद् यज्ञोऽजायत ॥ ११ ॥

सः। वै। यज्ञात्। अजायत। तस्मात्। यज्ञः। अजायत ॥ ११ ॥

स यज्ञस्तस्य यज्ञः स यज्ञस्य शिरस्कृतम् ॥ १२ ॥

---

१ CD वाह्नो for वा अह्नो. २ A B B̊ C D E R S̊ Cs P J Cp भूमेर०. Dc भूमेर० changed to भूमेर०. We with K K̊ V P̊. ३ A B B̊ C D E R S̊ Cs P J Cp तस्मा-द्भूमिर०. Dc भूमिर० changed to भूमिर०. We with K K̊ V P̊.

सः । यज्ञः । तस्य॑ । यज्ञः । सः । यज्ञस्य॑ । शिरः॑ । कृतम् ॥ १२ ॥

**स स्तनयति स वि द्योतते स उ अश्मानमस्यति ॥ १३ ॥**

सः । स्तनयति । सः । वि । द्योतते । सः । ऊं इति॑ । अश्मा॑नम् । अस्यति ॥ १३ ॥

**पापाय॑ वा भद्राय॑ वा पुरु॑षायासु॑राय वा ॥ १४ ॥**

पापाय॑ । वा । भद्राय॑ । वा । पुरु॑षाय । असु॑राय । वा ॥ १४ ॥

**यद्वा॑ कृणोष्योष॑धीर्यद्वा वर्षसि भद्रया यद्वा॑ जन्यमवीवृधः ॥ १५ ॥**

यत् । वा । कृणोषि॑ । ओष॑धीः । यत् । वा । वर्ष॑सि । भद्रया॑ । यत् । वा । जन्यम् । अ-वीवृधः ॥ १५ ॥

**तावाँस्ते मघवन् महिमोपो॑ ते तन्वः॑ शतम् ॥ १६ ॥**

तावा॑न् । ते । मघऽवन् । महिमा । उपो इति॑ । ते । तन्वः॑ । शतम् ॥ १६ ॥

**उपो॑ ते बध्वे[2] बद्धानि यदि वासि न्यर्बुदम् ॥ १७ ॥ (१८)**

उपो इति॑ । ते । बध्वे॑ । बद्धा॑नि । यदि॑ । वा । असि॑ । निऽअर्बुदम् ॥ १७ ॥ (१८)

इति चतुर्थेऽनुवाके चतुर्थं पर्यायसूक्तम् ॥

**भूयानिन्द्रो॑ नमुराद् भूया॑निन्द्रासि मृत्युभ्यः॑ ॥ १ ॥**

भूया॑न् । इन्द्रः॑ । नमुरात् । भूया॑न् । इन्द्र । असि । मृत्युऽभ्यः॑ ॥ १ ॥

**भूयानरा॑त्याः शच्याः पति॒स्त्वमि॑न्द्रासि विभूः प्रभूरिति त्वोपा॑स्महे वयम् ॥ २ ॥**

भूया॑न् । अरा॑त्याः । शच्याः॑ । पतिः॑ । त्वम् । इन्द्र । असि । विऽभूः । प्रऽभूः । इति॑ । त्वा । उप॑ । आस्महे । वयम् ॥ २ ॥

**नम॑स्ते अस्तु पश्यत पश्य॑ मा पश्यत ॥ ३ ॥**

नमः॑ । ते । अस्तु । पश्यत । पश्य॑ । मा । पश्यत ॥ ३ ॥

**अन्नाद्ये॑न यश॑सा तेज॑सा ब्राह्मणवर्च॑सेन॑ ॥ ४ ॥**

---

१ All our authorities have जन्यमवीवृधः (the pada-authorities अवीवृधः ।.) २ A D S̊ बध्वे बद्धा॑°. R बद्धे बद्धा°. Cs बध्वे बधा॑°. E बद्धे बद्धा॑°. B̊ C P J बद्धे वद्धा॑°. P̊ बद्धे॑ । बद्धानि॑ ।. K K̊ V बध्वै बद्धा°. Dc बद्धे बद्धा॑° changed to बध्वे॑ बद्धा°. Cp बद्धे॑ । बद्धा॑नि । changed from बद्धे॑ । बद्धानि॑ ।. Rw बद्धे बद्धा॑नि.

अन्नऽअद्येन । यशसा । तेजसा । ब्राह्मणऽवर्चसेन ॥ ४ ॥

अम्भो अमो महः सह इति त्वोपास्महे वयम् ।०।० ॥ ५ ॥

अम्भः । अमः । महः । सहः । इति ।० ॥ ५ ॥

अम्भो अरुणं रजतं रजः सह इति त्वोपास्महे वयम् ।०।० ॥ ६ ॥ (१९)

अम्भः । अरुणम् । रजतम् । रजः । सहः । इति ।० ॥ ६ ॥ (१९)

इति चतुर्थेऽनुवाके पञ्चमं पर्यायसूक्तम् ॥

उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम् ।०।० ॥ १ ॥

उरुः । पृथुः । सुऽभूः । भुवः । इति ।० ॥ १ ॥

प्रथो वरो व्यचो लोक इति त्वोपास्महे वयम् ।०।० ॥ २ ॥

प्रथः । वरः । व्यचः । लोकः । इति ।० ॥ २ ॥

भवद्वसुरिदद्वसुः संयद्वसुरायद्वसुरिति त्वोपास्महे वयम् ॥ ३ ॥

भवत्ऽवसुः । इदत्ऽवसुः । संयत्ऽवसुः । आयत्ऽवसुः । इति । त्वा । उप । आस्महे । वयम् ॥ ३ ॥

नमस्ते अस्तु पश्यत पश्य मा पश्यत ॥ ४ ॥

नमः । ते । अस्तु । पश्यत । पश्य । मा । पश्यत ॥ ४ ॥

अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन ॥ ५ ॥ (२०)

अन्नऽअद्येन । यशसा । तेजसा । ब्राह्मणऽवर्चसेन ॥ ५ ॥ (२०)

चतुर्थेऽनुवाके षष्ठं पर्यायसूक्तम् ॥

चतुर्थोऽनुवाकः ॥

## इति त्रयोदशं काण्डं समाप्तम् ॥

---

१ The Vaidikas repeat the two lines नमस्ते and अन्नाद्येन after this verse as also after the following one and after each of the first two verses of the next paryâya-sûkta. This would not interfere with the number of the verses composing the paryâya-sûktas as intermediate repetitions do not come in the enumeration. There is nothing in the *Sarvânukramanî* or the *Pañchapatalikâ* inconsistent with the Vaidikas' repetition. **C D E R S̃ Dc** indicate the repetition and the other MSS are not opposed to it  २ **P J** पृथः ।.  ३ **K** ॰राजद्वसु॰.

३७

विवाहपरमेतत् काण्डम् । तत्र वक्ष्यमाणानि कर्माणि भवन्ति । तेषु तत्तन्मन्त्रविनियोगा सूत्रकारेण प्रायोऽन्वर्थमेव कृतास्ते कौशिके दशमेऽध्याये विस्तरेण प्रपञ्चितास्तत्रैव द्रष्टव्याः । अत्र तु कर्मक्रमस्य मन्त्रवद् दिग्दर्शनम् ॥

सूक्तारम्भे सूर्या नाम या सूर्यरूपा सवितृपुत्री देवी तस्या विवाहस्य कथा वर्णिता ॥

कर्मक्रमस्तु यथा वक्ष्यते ।

विवाहः । स कुमार्याः पितृगृहे । सत्येनोत्तभितेति षोडश पूर्वापरमिति १.२३, २४ द्वे इत्यष्टादशभिराज्यहोमः । आगमक्कशर कुमारीमाशयति[1] ॥ हस्तगृहीतशरावसपुटं सानुचर कचिद् वर प्रति प्रेषयति । १.३१ ॥ ब्राह्मणप्रेषणम् । १ ३१ ॥ कुमारीरक्षार्थं पालप्रेषणम् । १.३४ ॥ उदकग्रहणार्थं व्रजनम् ॥ अप्सु लोष्टं प्रक्षिपति । १.३७ ॥ अवगाहनम् । १.३८ ॥ उदकघटपूरणम् । १.३८ ॥ उदकघटम् उदाहाराय प्रयच्छति । १.३९ ॥ शाखाया घटनिधानम् ॥ तेनोदकेन सर्वोदकार्यकरणम् ॥ आज्यहोमः । १.१७ ॥ कुमारीकेशविचर्तनम् । १.५८ ॥ ईशानकोणे तिष्ठन्त्याः कुमार्या उष्णोदकेन आप्लावनम् । २.६५ ॥ शीतोदकेन सेचनम् । १.३५, १.४३ ॥ वाससाङ्गानि प्रमार्ष्टि ॥ तत् कुमारी पालाय प्रयच्छति । २.६६, ६७ ॥ तद्वासस्तुम्बरदण्डेन गृहीत्वा गोपाटे प्रक्षिपति ॥ अहतेन वाससा तामाच्छादयति । १.४५, ५३ ॥ यज्ञोपवीतवद्वाधूय वस्त्रं बध्नाति ॥ केशप्रलेखनम् । २ ६८ ॥ योक्त्रस्य कटिप्रदेशे बन्धनम् । १.४२, २.७० ॥ ज्येष्ठीमधुमणे रक्तसूत्रेण बन्धनम्[2] अनामिकायाम् ॥ कन्यादानाद् अनन्तरम् उपाध्यायः कुमारी हस्ते गृहीत्वा कौतुकगृहान्निर्णयति ॥ शाखायां युग धारयति । १.२० ॥ दक्षिणतस्तत् पुरुषो धारयति । कन्याया ललाटप्रदेशे हिरण्यबन्धनम् । १.४०, ४१ । तदुपरि युगच्छिद्राद् उदकनिनयनम् ॥ कुमार्या अश्मारोहणम् । १.४७ ॥ तया लाजहोमः । २.६३ ॥ वरेण पाणिग्रहणम् । १.४८–५२ ॥ वरः कन्याम् अग्निं त्रिः परिणयति । १.३९ ॥ सप्तलेखालेखनम्[3] ॥ तासु वधूमुत्क्रामयति ॥ तल्प उपवेशयति । २.३१, १.६० ॥ उपविष्टायास्तस्याः पादौ सुहृत् प्रक्षालयति ॥ कुमारीकटिवेष्टित योक्त्रं मोचयति । १.५७,५८ ॥ तद्योक्त्रे भृत्याः सरभन्ते । ये जयन्ति ते बलीयांसो मन्यन्ते ॥ वधूः सर्वौषधीर्वरमूर्ध्नि पलाशपत्रेणावपति । २.५३–५८ ॥ कुमारी तल्पाद् उत्थापयति । १.५९, ६०, ६२ ॥ इति विवाहः ॥

अथोद्वाह । तत्र वरस्य गृहे वधूनयनम् । तद्यथा । वधूवरौ यानमारोहयति । १.६१, २.३० ॥ कर्ता अग्रे व्रजति । २.८, १.६४ ॥ दक्षिणेन पादेन प्रक्रामति अध्वानम् । २.११, १ ३४ ॥ तेनैवाह्वा यद्यन्याप्यूढा तर्हि वधूवस्त्रस्य दशाखण्ड गृहीत्वा चतुष्पथे क्षिप्त्वा दक्षिणेन पादेन तदुपरि तिष्ठति तत् प्रायश्चित्तम् । २ ७४ ॥ उभयोरूढयोः शुभकामः सन् जपं कुर्यात् । २.४६ ॥ अन्तरा ब्राह्मणम् अतिक्रमयतः ॥ यानस्य विनिष्क्रमणम् । २.४७ ॥ अध्वनि तीर्थे आयाते लोष्टं प्रक्षिप्य तत उत्तरति । २.६ ॥ महावृक्षेषु दृष्टेषु जपति । २.९ ॥ वध्वीक्षणार्थं कुदृक्षु स्त्रीष्वागतासु ताः प्रति जपति । २.२८ ॥ द्वैभेद (सिन्धुसंगमं) दृष्ट्वा जपति । २.७ ॥ ओषधीनदीक्षेत्रवनेषु दृष्टेषु जपति । २.७ ॥ श्मशाने दृष्टे जपति । २.७३ ॥ अध्वनि सुप्तायां वध्वां प्रबोधयति मन्त्रेण । २.७५ ॥ वरपितृगृह आसन्नागते जपति । २.१२ ॥ गृहमागते याने तद् अद्भिः सप्रोक्ष्य बलीवर्दौ विमोचयति । २.१६ ॥ निर्ऋत्यपनोदाय पत्नीशालां प्रोक्षति । २ १९ ॥ दक्षिणतो गृहपार्श्वे गोमयपिण्डेऽश्मानं स्थापयति । १.४७ ॥ तस्योपरि पलाशस्य यत्पर्णत्रितय तस्माद् मध्यमपर्णं गृहीत्वा स्थापयति तस्योपरि घृतं घृतस्योपरि चत्वारि दूर्वाग्राणि तदुपरि वधू स्थापयति । १.४७ ॥ तस्माद् वधूं प्रपाद्य वरगृहे प्रवेशयति । २.२६, १.२१, १.६३, १.६४ । पूर्णपात्रेण कुम्भफलेन अक्षतसहितेन प्रवेशः ॥ अग्निं प्रज्वाल्य ततो हस्तग्रहणं कृत्वा वरो वधूं परिणयति । २.१७,१८ ॥ अग्निसरस्वतीपितृसूर्यदेवमित्रवरुणेभ्यो नमस्कुर्वतीम् अनुमन्त्रयते । २.२०, २.४६ ॥ कश्चिद् रोहितचर्म आहरति । २.२१ । उपस्तृतस्य तस्योपरि बल्बजम् उपस्तृणीते तस्योपरि वधूमारोहयति उपवेशयति च । २.२३ ॥ दक्षिणोत्तरम् उपस्थं कुरुते वधू. ॥ ब्राह्मणायनं कुमारं शुभनामकं तस्या उपस्थ उपवेशयति । २ २४ ॥ कुमाराय फलमोदकादि दत्त्वा तम् उत्थापयति । २.२५ ॥

---

1 See Kânda II. 36. 2 See I. 34. 3 See V 1.6.

तेन भूतेनेत्यादिना वरवध्वौ क्रमेण जुहुतः[1] । २.१–५, २.४५ ॥ सपातान् आनयति । उदपात्रे उलपान् सपातान् आनयति । उदपात्र वरवध्वोरञ्जल्योर्निनयाति । २ ४५ ॥ तेन भूतेनेति[2] इमान् सपात्य तान् [illegible] च जायापती उपसर्पयति । तत एकस्मिन् स्थाने स्वजनैः सह उपविश्य मिष्टान्नस्य सहाशनं कुर्यात् पति ॥ तेनेत सूक्तेन [illegible]नाम् आज्यमिश्राणां पूर्णाञ्जलिं जुहोति ॥ इत्युद्वाहः ॥

अथ चतुर्थिकाकर्म । तद्यथा । सप्त मर्यादा[3] इति वरो व्रीहीन् जुहोति विवाहाग्नौ ॥ अक्ष्यौ नाविति[4] परस्पर वरवध्वावक्षिणी अञ्जाते ॥ महीमूर्ध्विति वरवध्वौ खट्वामालम्भयति आचार्य. । आरोहयति । २.३१ । तत्र च तामुपवेशयति । २.२३ ॥ संवेशयति च । २ ३२ ॥ तौ वस्त्रेणाच्छादयति[5] ॥ तावभिमुखौ करोति । २.३७ ॥ इहेमाविति । २.६४ । वरवध्वौ त्रिः सनुदति ॥ मदुघमणिं पिष्ट्वा औक्षे प्रक्षिप्य वधूवरौ परस्पर सगच्छेते । २.७१,७२ ॥ अग्र जज्ञानमिति[6] अङ्गुष्ठेन वरः प्रजननदेशं स्पृशाति ॥ खट्वाया उत्थापयति वरो वधूम् । २.४३ ॥ अहतवस्त्र वरवध्वौ परिधापयति आचार्य. । १.४५ । ५३,५५ ॥ वधूसीमन्ते शष्प निदधाति वरः । १.५५,५६ । व्रीहियवौ सीमन्ते निदधाति अमन्त्रकम् । दर्भपिञ्जल्या सीमन्तं विचृतति । शणशकलेन वधूकेशान् परिवेष्टयति ॥ सर्वेण काण्डेन आज्य जुहोति वरः । प्रायश्चित्तमेतत् ॥ शकद्रव्य पृथक् करोति इदं तव इद मामकीयमिति । १.३२ ॥ वाधूय वस्त्र ददत वरमनुमन्त्रयते । १.२५–३० । आचार्यस्तत् प्रतिगृह्णाति । २.४१,४२ ॥ तत् स्थाणावासजति । २.४८ ॥ तद् गृहीत्वा गच्छति । २.४९ ॥ तद् वृक्ष प्रतिच्छादयति । २.५० ॥ सर्वे स्नानं कुर्वन्ति । २.४५ ॥ तेन वाधूयेनाच्छादयत्यात्मानमाचार्यः । २.५१ ॥ नव वसानः । २ ४४ । इति जपित्वा आचार्यो गृहं गच्छति ॥ कुमार्या नीयमानाया पितृगृहे रोदने सति जीवं रुदन्ति । १.४६ । इत्यनया यदीमे केशिनः । २.५९–६२ । इति चतसृभिश्चाज्य जुहोति । तत् प्रायश्चित्तम् ॥ इति चतुर्थिकाकर्म ॥

**सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।**
**ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥ १ ॥**

सत्येन । उत्तभिता । भूमिः । सूर्येण । उत्तभिता । द्यौः ।
ऋतेन । आदित्याः । तिष्ठन्ति । दिवि । सोमः । अधि । श्रितः ॥ १ ॥

**सोमेनादित्या बलिनः सोमेन पृथिवी मही ।**
**अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥**

सोमेन । आदित्याः । बलिनः । सोमेन । पृथिवी । मही ।
अथो इति । नक्षत्राणाम् । एषाम् । उपऽस्थे । सोमः । आऽहितः ॥ २ ॥

**सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम्[1] ।**
**सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति पार्थिवः ॥ ३ ॥**

सोमम् । मन्यते । पपिऽवान् । यत् । सम्ऽपिंषन्ति[1] । ओषधिम् ।
सोमम् । यम् । ब्रह्माणः । विदुः । न । तस्य । अश्नाति । पार्थिवः ॥ ३ ॥

---

1 See VI. 78, VI. 82 and V. 24. 2 See VI. 78. 3 See V. 1, 6. 4 See VII. 37. 5 See VII. 6, 2. 6 See VII. 38. 7 See I. 34. 8 See IV 1.

---

१ C °पिषं°. A S̄ °पींषं°. D °पीषं°. P P̄ J °पीषं°. Cp °पिंशंति .

यत् त्वा सोम प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ४ ॥

यत् । त्वा । सोम । प्रऽपिबन्ति । ततः । आ । प्यायसे । पुनः ।
वायुः । सोमस्य । रक्षिता । समानाम् । मासः । आऽकृतिः ॥ ४ ॥

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥ ५ ॥

आच्छत्ऽविधानैः । गुपितः । बार्हतैः । सोम । रक्षितः ।
ग्राव्णाम् । इत् । शृण्वन् । तिष्ठसि । न । ते । अश्नाति । पार्थिवः ॥ ५ ॥

चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् ।
द्यौर्भूमिः कोश आसीद् यदयात् सूर्या पतिम् ॥ ६ ॥

चित्तिः । आः[१] । उपऽबर्हणम् । चक्षुः । आः । अभिऽअञ्जनम् ।
द्यौः । भूमिः । कोशः । आसीत् । यत् । अयात् । सूर्या । पतिम् ॥ ६ ॥

रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।
सूर्याया भद्रमिद् वासो गाथयैति[२] परिष्कृता ॥ ७ ॥

रैभी । आसीत् । अनुऽदेयी । नाराशंसी । निऽओचनी ।
सूर्यायाः । भद्रम् । इत् । वासः । गाथया । एति । परिष्कृता ॥ ७ ॥

स्तोमा आसन् प्रतिधयः कुरीरं छन्द ओपशः ।
सूर्याया अश्विना वराग्निरासीत् पुरोगवः ॥ ८ ॥

स्तोमाः । आसन् । प्रतिऽधयः । कुरीरम् । छन्दः । ओपशः ।
सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत् पत्ये शंसन्तीं मनसा सविताददात् ॥ ९ ॥

सोमः । वधूऽयुः । अभवत् । अश्विना । आस्ताम् । उभा । वरा ।
सूर्याम् । यत् । पत्ये । शंसन्तीम् । मनसा । सविता । अददात् ॥ ९ ॥

---

१ P² आ।. २ E ॰यैधि.

मनो॑ अस्या अन॑ आसीद् द्यौरा॑सीदुत च्छ॒दिः ।
शु॒क्राव॑नड्वाहा॑वास्तां यदया॑त् सू॒र्या पति॑म् ॥ १० ॥ (१)

मनः॑ । अ॒स्याः । अनः॑ । आ॒सी॒त् । द्यौः । आ॒सी॒त् । उ॒त । छ॒दिः ।
शु॒क्रौ । अ॒न॒ड्वाहौ॑ । आ॒स्ता॒म् । यत् । अया॑त् । सू॒र्या । पति॑म् ॥ १० ॥ (१)

ऋ॒क्सा॒माभ्या॑म॒भिहि॑तौ गावौ॑ ते साम॒नावै॑ताम्[1] ।
श्रोत्रे॑ ते च॒क्रे आ॑स्तां दि॒वि पन्था॑श्चरा॒चरः ॥ ११ ॥

ऋ॒क्ऽसा॒माभ्या॑म् । अ॒भिऽहि॑तौ । गावौ॑ । ते॒ । सा॒म॒नौ । ऐ॒ता॒म् ।
श्रोत्रे॒ इति॑ । ते॒ । च॒क्रे इति॑ । आ॒स्ता॒म् । दि॒वि । पन्थाः॑[2] । च॒रा॒च॒रः ॥ ११ ॥

शुची॑ ते च॒क्रे या॒त्या व्या॒नो अक्ष॒ आह॑तः ।
अनो॑ मन॒स्मयं॑ सू॒र्यारो॑हत् प्रय॒ती[3] पति॑म् ॥ १२ ॥

शुची॒ इति॑ । ते॒ । च॒क्रे इति॑ । या॒त्याः । वि॒ऽआ॒नः । अक्षः॑ । आऽह॑तः ।
अनः॑ । म॒न॒स्मय॑म् । सू॒र्या । आ । अ॒रो॒ह॒त् । प्र॒ऽय॒ती । पति॑म् ॥ १२ ॥

सू॒र्याया॑ वह॒तुः प्रागा॑त् सवि॒ता यमवा॒सृ॑जत् ।
म॒घासु॑ ह॒न्यन्ते॑[4] गावः॑ फल्गु॑नीषु व्यु॒ह्यते ॥ १३ ॥

सू॒र्यायाः॑ । व॒ह॒तुः । प्र । अ॒गा॒त् । स॒वि॒ता । यम् । अ॒व॒ऽअसृ॑जत् ।
म॒घासु॑ । ह॒न्यन्ते॑[4] । गावः॑ । फ॒ल्गुनी॑षु । वि । उ॒ह्य॒ते ॥ १३ ॥

यद॑श्विना पृ॒च्छमा॑ना॒वया॑तं त्रिच॒क्रेण॑ वह॒तुं सू॒र्यायाः॑ ।
क्वैकं॑ च॒क्रं वा॑मासी॒त् क्व॑ दे॒ष्ट्राय॑ तस्थ॒थुः[5] ॥ १४ ॥

यत् । अ॒श्वि॒ना॒ । पृ॒च्छमा॑नौ । अया॑तम् । त्रि॒ऽच॒क्रेण॑ । व॒ह॒तुम् । सू॒र्यायाः॑ ।
क्व॑ । एक॑म् । च॒क्रम् । वा॒म् । आ॒सी॒त् । क्व॑ । दे॒ष्ट्राय॑ । त॒स्थ॒थुः ॥ १४ ॥

यदया॑तं शुभस्पती वरे॒यं सू॒र्यामुप॑ ।
विश्वे॑ दे॒वा अनु॒ तद् वा॑मजानन् पु॒त्रः पि॒तर॑मवृणीत[6] पू॒षा ॥ १५ ॥

यत् । अया॑तम् । शु॒भः । प॒ती इति॑ । व॒रे॒ऽय॑म्[7] । सू॒र्याम् । उप॑ ।

---

१ K^m सामनावितः. २ P पथाः।. ३ E प्रयंती. ४ All our authorities have हन्यंते. (P P^2 J C^p हन्यंते।.) Perhaps a चेत् or च is to be understood. ५ D E K^m C^s तस्थतुः. P तस्थथुः।. ६ K^m पितरावृणीत. ७ All our pada authorities have the avagraha.

विश्वे॑ । दे॒वाः । अनु॑ । तत् । वा॒म् । अ॒जा॒न॒न् । पु॒त्रः । पि॒तर॑म् । अ॒वृ॒णी॒त॒ । पू॒षा ॥ १५ ॥

द्वे ते॑ च॒क्रे सू॒र्ये[1] ब्र॒ह्माण॑ ऋतु॒था वि॑दुः ।

अथैकं॑ च॒क्रं यद् गुहा॒ तद॑द्धातय॒ इद् वि॒दुः[2] ॥ १६ ॥

द्वे इति॑ । ते । च॒क्रे इति॑ । सू॒र्ये[1] । ब्र॒ह्माणः॑ । ऋ॒तु॒ऽथा । वि॒दुः ।

अथ॑ । एक॑म्[3] । च॒क्रम् । यत् । गुहा॑ । तत् । अ॒द्धा॒तयः॑ । इत् । वि॒दुः[2] ॥ १६ ॥

अ॒र्य॒मणं॑ यजामहे सुब॒न्धुं प॑तिवेद॑नम् ।

उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नात् प्रे॒तो मु॑ञ्चामि॒ नामु॒तः ॥ १७ ॥

अ॒र्य॒मण॑म् । य॒जा॒म॒हे॒ । सु॒ऽबन्धु॑म् । प॒ति॒ऽवेद॑नम् ।

उ॒र्वा॒रु॒कम्ऽइ॑व । बन्ध॑नात् । प्र । इ॒तः । मु॒ञ्चा॒मि॒ । न । अ॒मु॒तः॑ ॥ १७ ॥

प्रे॒तो मु॑ञ्चामि॒ नामु॒तः सु॒बद्धा॑ममु॒तस्क॑रम् ।

य॒थेयमि॑न्द्र मीढ्वः सुपु॒त्रा सु॒भगास॑ति ॥ १८ ॥

प्र । इ॒तः । मु॒ञ्चा॒मि॒ । न । अ॒मु॒तः॑ । सु॒ऽबद्धा॑म् । अ॒मु॒तः॑ । क॒रम् ।

य॒था॑ । इ॒यम् । इ॒न्द्र॒ । मी॒ढ्वः॒ । सु॒ऽपु॒त्रा । सु॒ऽभगा॑ । अस॑ति ॥ १८ ॥

प्र त्वा॑ मुञ्चामि॒ वरु॑णस्य॒ पाशा॒द् येन॒ त्वाब॑ध्नात् सवि॒ता सु॒शेवाः॑ ।

ऋ॒तस्य॒ योनौ॑ सु॒कृ॒तस्य॑ लो॒के स्यो॒नं ते॑ अस्तु स॒हसं॑भलायै ॥ १९ ॥

प्र । त्वा॒ । मु॒ञ्चा॒मि[4] । वरु॑णस्य । पाशा॑त् । येन॑ । त्वा॒ । अब॑ध्नात् । स॒वि॒ता । सु॒ऽशेवाः॑ ।

ऋ॒तस्य॑ । योनौ॑ । सु॒ऽकृ॒तस्य॑ । लो॒के । स्यो॒नम् । ते॒ । अ॒स्तु॒ । स॒ह॒ऽसं॑भलायै ॥ १९ ॥

भग॑स्त्वे॒तो न॑यतु हस्त॒गृह्या॒श्विना॑ त्वा॒ प्र व॑हतां॒ रथे॑न ।

गृ॒हान् ग॑च्छ गृ॒हप॑त्नी॒ यथासो॑ व॒शिनी॒ त्वं वि॒दथ॒मा व॑दासि ॥ २० ॥ (२)

भगः[5] । त्वा॒ । इ॒तः । न॒य॒तु॒ । ह॒स्त॒ऽगृह्य॑ । अ॒श्विना॑ । त्वा॒ । प्र । व॒ह॒ता॒म् । रथे॑न ।

गृ॒हान् । ग॒च्छ॒ । गृ॒ह॒ऽप॑त्नी । यथा॑ । अस॑ः । व॒शिनी॑ । त्वम् । वि॒दथ॑म् । आ । व॒दा॒सि॒ ॥ २० ॥ (२)

इ॒ह प्रि॒यं प्र॒जायै॑ ते॒ सम्॑ृध्यताम॒स्मिन् गृ॒हे गार्ह॑पत्याय जागृहि ।

---

१ All our authorities have सूर्यै. २ So we with A B[h] C D E K R S[m] V Cs P J Cp. Dc इद्विदुः changed to इद्विदुः. K[m] विदुः. P[2] विदुः।. The correction to विदुः is not inevitable. ३ P ऐकम्।. We with P[2] J Cp. ४ D मुचामि. P[2] Cp मुन्त्रामि।. ५ P भगः।.

एना पत्या तन्वं[1] सं स्पृशस्वाथ जिर्विर्विदथमा वदासि ॥ २१ ॥

इह । प्रियम् । प्रऽजायै । ते । सम् । ऋध्यताम् । अस्मिन् । गृहे । गार्हऽपत्याय । जागृहि ।
एना । पत्या । तन्वम् । सम् । स्पृशस्व । अथ । जिर्विः । विदथम् । आ । वदासि ॥ २१ ॥

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ ॥ २२ ॥

इह । एव । स्तम् । मा । वि । यौष्टम् । विश्वम् । आयुः । वि । अश्नुतम्[3] ।
क्रीडन्तौ । पुत्रैः । नप्तृऽभिः । मोदमानौ । सुऽअस्तकौ ॥ २२ ॥

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोर्णवम् ।
विश्वान्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायसे नवः ॥ २३ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायसे । नवः ॥ २३ ॥

नवोनवो भवसि जायमानोह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन् प्र चन्द्रमस्तिरसे दीर्घमायुः ॥ २४ ॥

नवःऽनवः । भवसि । जायमानः । अह्नाम् । केतुः । उषसाम् । एषि । अग्रम् ।
भागम् । देवेभ्यः । वि । दधासि । आऽयन् । प्र । चन्द्रमः । तिरसे । दीर्घम् । आयुः ॥ २४ ॥

परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् ॥ २५ ॥

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु ।
कृत्या । एषा । पत्ऽवती । भूत्वा । आ । जाया । विशते । पतिम् ॥ २५ ॥

नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु[4] बध्यते ॥ २६ ॥

नीलऽलोहितम् । भवति । कृत्या । आसक्तिः । वि । अज्यते ।

---

१ B^h C E तन्वं३सं. We with A D K K^m R S^m V Dc Cs. २ So we with all our authorities. In VIII. 1. 6. Sâyana has जिर्वि°, not जिव्रि°. In Rigveda the form is जिव्रि, but from Sâyana on Rig. 70. 10 it appears the regular form is जिर्वि. and जिव्रि a corruption ३ P P^2 अश्नुतम् ।. ४ B 'बन्ध्वेषु.

एधन्ते । अस्याः । ज्ञातयः । पतिः । बन्धेषु । बध्यते ॥ २६ ॥

**अश्लीला तनूर्भवति रुशती पापयामुया ।**

**पतिर्यद्[1] वध्वो३ वाससः[2] स्वमङ्गमभ्यूर्णुते ॥ २७ ॥**

अश्लीला । तनूः । भवति । रुशती । पापया । अमुया ।

पतिः । यत् । वध्वः[1] । वाससः[2] । स्वम् । अङ्गम् । अभिऽऊर्णुते ॥ २७ ॥

**आशसनं विशसनमथो अधिविकर्तनम् ।**

**सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शुम्भति ॥ २८ ॥**

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।

सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । उत । शुम्भति ॥ २८ ॥

**तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।**

**सूर्यां यो ब्रह्मा वेद स इद् वाधूयमर्हति ॥ २९ ॥**

तृष्टम् । एतत् । कटुकम् । अपाष्ठऽवत् । विषऽवत्[3] । न । एतत् । अत्तवे ।

सूर्याम् । यः । ब्रह्मा । वेद । सः । इत् । वाधूऽयम् । अर्हति ॥ २९ ॥

**स इत् तत् स्योनं हरति ब्रह्मा वासः सुमङ्गलम् ।**

**प्रायश्चित्तिं यो अध्येति येन जाया न रिष्यति ॥ ३० ॥ (३)**

सः । इत् । तत् । स्योनम् । हरति । ब्रह्मा । वासः । सुऽमङ्गलम् ।

प्रायश्चित्तिम् । यः । अधिऽएति । येन । जाया । न । रिष्यति ॥ ३० ॥ (३)

**युवं भगं सं भरतं समृद्धमृतं वदन्तावृतोद्येषु[4] ।**

**ब्रह्मणस्पते पतिमस्यै रोचय चारु संभलो वदतु वाचमेताम् ॥ ३१ ॥**

युवम् । भगम् । सम् । भरतम् । सम्ऽऋद्धम् । ऋतम् । वदन्तौ । ऋतऽउद्येषु ।

ब्रह्मणः । पते । पतिम् । अस्यै[5] । रोचय । चारु । सम्ऽभलः । वदतु । वाचम् । एताम् ॥ ३१ ॥

**इहेदसाथ न परो गमाथेमं गावः प्रजया वर्धयाथ[6] ।**

**शुभं यतीरुस्रियाः सोमवर्चसो विश्वे देवाः क्रन्निह[7] वो मनांसि ॥ ३२ ॥**

---

१ A B C D E R S P P J Cp °यंद्वध्वो°. Cs °यंबध्वो°. We with B K K V Dc.
२ So we with all our authorities. ३ P विषऽवन् ।. Cp द्विष०वत् ।. We with P J.
४ K °वृताद्येषु. ५ P अस्य ।. ६ B संवर्धयाथ. ७ So all our authorities, not क्र°.

इह । इत् । असाथ । न । परः । गमाथ । इमम् । गावः । प्रऽजया । वर्धयाथ ।
शुभम् । यतीः । उस्रियाः । सोमऽवर्चसः । विश्वे । देवाः । क्रन् । इह । वः । मनांसि ॥ ३२ ॥

**इमं गावः प्रजया सं विशाथायं देवानां न मिनाति भागम् ।**
**अस्मै वः पूषा मरुतश्च सर्वे अस्मै वो धाता सविता सुवाति ॥ ३३ ॥**

इमम् । गावः । प्रऽजया । सम् । विशाथ । अयम् । देवानाम् । न । मिनाति । भागम् ।
अस्मै । वः । पूषा । मरुतः । च । सर्वे । अस्मै । वः । धाता । सविता । सुवाति ॥ ३३ ॥

**अनृक्षरा ऋजवः सन्तु पन्थानो येभिः सखायो यन्ति नो वरेयम् ।**
**सं भगेन समर्यम्णा सं धाता सृजतु वर्चसा ॥ ३४ ॥**

अनृक्षराः । ऋजवः । सन्तु । पन्थानः । येभिः । सखायः । यन्ति । नः । वरेऽयम् ।
सम् । भगेन । सम् । अर्यम्णा । सम् । धाता । सृजतु । वर्चसा ॥ ३४ ॥

**यच्च वर्चो अक्षेषु सुरायां च यदाहितम् ।**
**यद् गोष्वश्विना वर्चस्तेनेमां वर्चसावतम् ॥ ३५ ॥**

यत् । च । वर्चः । अक्षेषु । सुरायाम् । च । यत् । आऽहितम् ।
यत् । गोषु । अश्विना । वर्चः । तेन । इमाम् । वर्चसा । अवतम् ॥ ३५ ॥

**येन महानघ्न्या जघनमश्विना येन वा सुरा ।**
**येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ॥ ३६ ॥**

येन । महाऽनघ्न्याः । जघनम् । अश्विना । येन । वा । सुरा ।
येन । अक्षाः । अभिऽअसिच्यन्त । तेन । इमाम् । वर्चसा । अवतम् ॥ ३६ ॥

**यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईडते अध्वरेषु ।**
**अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्यावान् ॥ ३७ ॥**

यः । अनिध्मः । दीदयत् । अप्ऽसु । अन्तः । यम् । विप्रासः । ईडते । अध्वरेषु ।
अपाम् । नपात् । मधुऽमतीः । अपः । दाः । याभिः । इन्द्रः । ववृधे । वीर्यऽवान् ॥ ३७ ॥

---

१ S विशाथायं. २ A P नि. ३ P अर्य° ।. ४ All our authorities have °ष्वश्विना. The nominative may be construed with युवाम् understood. P has अवतरम् which points to a reading अवताम् ।. ५ So all our authorities, P P J Cp dividing महाऽनघ्न्याः ।. ६ A B E R ३ for १. ७ S वीर्यविान्. ८ P has changed °सः to °साः ।.

इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि ।
यो भद्रो रोचनस्तमुदचामि ॥ ३८ ॥

इदम् । अहम् । रुशन्तम् । ग्राभम् । तनूऽदूषिम् । अप । ऊहामि ।
यः । भद्रः । रोचनः । तम् । उत् । अचामि ॥ ३८ ॥

आस्यै ब्राह्मणाः स्नपनीर्हरन्त्ववीरघ्नीरुदजन्त्वापः ।
अर्यम्णो अग्निं पर्यैतु पूषन् प्रतीक्षन्ते श्वशुरो देवरश्च ॥ ३९ ॥

आ । अस्यै । ब्राह्मणाः । स्नपनीः । हरन्तु । अवीरऽघ्नीः । उत् । अजन्तु । आपः ।
अर्यम्णः । अग्निम् । परि । एतु । पूषन् । प्रति । ईक्षन्ते । श्वशुरः । देवरः । च ॥ ३९ ॥

शं ते हिरण्यं शमु सन्त्वापः शं मेथिर्भवतु शं युगस्य तर्द्म ।
शं त आपः शतपवित्रा भवन्तु शमु पत्या तन्वं सं स्पृशस्व ॥ ४० ॥ (४)

शम् । ते । हिरण्यम् । शम् । ऊं इति । सन्तु । आपः । शम् । मेथिः । भवतु । शम् ।
युगस्य । तर्द्म ।
शम् । ते । आपः । शतऽपवित्राः । भवन्तु । शम् । ऊं इति । पत्या । तन्वम् । सम् ।
स्पृशस्व ॥ ४० ॥ (४)

खे रथस्य खेनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्वाकृणोः सूर्यत्वचम् ॥ ४१ ॥

खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतो इति शतऽक्रतो ।
अपालाम् । इन्द्र । त्रिः । पूत्वा । अकृणोः । सूर्यऽत्वचम् ॥ ४१ ॥

आशासाना सौमनसं प्रजां सौभाग्यं रयिम् ।
पत्युरनुव्रता भूत्वा सं नह्यस्वामृताय कम् ॥ ४२ ॥

आऽशासाना । सौमनसम् । प्रऽजाम् । सौभाग्यम् । रयिम् ।
पत्युः । अनुऽव्रता । भूत्वा । सम् । नह्यस्व । अमृताय । कम् ॥ ४२ ॥

यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।

---

१ E K रोचनस्त्वमुदचामि. २ K[m] पर्यैति. ३ P[2] पूषम्।. ४ B[h] C D E R S[m] ३ for १. We with K K[m] V Dc Cs. ५ B E K[m] R V Dc त्रिःपूत्वा॰. We with A B[h] C D K S[m] Cs.

एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ॥ ४३ ॥

यथा । सिन्धुः । नदीनाम् । साम्ऽराज्यम् । सुसुवे । वृषा ।

एव । त्वम् । सम्ऽराज्ञी । एधि । पत्युः । अस्तम् । पराऽइत्य ॥ ४३ ॥

सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु ।

ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ॥ ४४ ॥

सम्ऽराज्ञी । एधि । श्वशुरेषु । सम्ऽराज्ञी । उत । देवृषु ।

ननान्दुः । सम्ऽराज्ञी । एधि । सम्ऽराज्ञी । उत । श्वश्र्वाः ॥ ४४ ॥

या अकृन्तन्नवयन् याश्च तत्निरे या देवीरन्ताँ अभितोददन्त ।[1][2]

तास्त्वा जरसे सं व्ययन्त्वायुष्मतीदं परि धत्स्व वासः ॥ ४५ ॥

याः । अकृन्तन् । अवयन् । याः । च । तत्निरे । याः । देवीः । अन्तान् । अभितः । अददन्त ।

ताः । त्वा । जरसे । सम् । व्ययन्तु । आयुष्मती । इदम् । परि । धत्स्व । वासः ॥ ४५ ॥

जीवं रुदन्ति वि नयन्त्यध्वरं दीर्घामनु प्रसितिं दीध्युर्नरः ।

वामं पितृभ्यो य इदं समीरिरे मयः पतिभ्यो जनये परिष्वजे ॥ ४६ ॥

जीवम् । रुदन्ति । वि । नयन्ति । अध्वरम् । दीर्घाम् । अनु । प्रऽसितिम् । दीध्युः । नरः ।

वामम् । पितृऽभ्यः । ये । इदम् । सम्ऽईरिरे । मयः । पतिऽभ्यः । जनये । परिऽस्वजे ॥ ४६ ॥

स्योनं ध्रुवं प्रजायै धारयामि तेऽश्मानं[3] देव्याः पृथिव्या उपस्थे ।

तमा तिष्ठानुमाद्या[4] सुवर्चा दीर्घं त आयुः सविता कृणोतु ॥ ४७ ॥

स्योनम् । ध्रुवम् । प्रऽजायै । धारयामि । ते । अश्मानम् । देव्याः । पृथिव्याः । उपऽस्थे ।

तम् । आ । तिष्ठ । अनुऽमाद्या । सुऽवर्चाः । दीर्घम् । ते । आयुः । सविता । कृणोतु ॥ ४७ ॥

येनाग्निरस्या भूम्या हस्तं जग्राह दक्षिणम् ।

तेन गृह्णामि ते हस्तं मा व्यथिष्ठा मया सह प्रजया च धनेन च ॥ ४८ ॥

येन । अग्निः । अस्याः । भूम्याः । हस्तम् । जग्राह । दक्षिणम् ।

तेन । गृह्णामि । ते । हस्तम् । मा । व्यथिष्ठाः । मया । सह । प्रऽजया । च । धनेन । च ॥ ४८ ॥

देवस्ते सविता हस्तं गृह्णातु सोमो राजा सुप्रजसं कृणोतु ।

---

१ A B C D °यंयाश्च. $\overset{m}{S}$ °यंन्याश्च. We with $\overset{h}{B}$ E K $\overset{m}{K}$ R V Dc Cs. २ E R °रंतं.
३ B °श्मानं. ४ $\overset{m}{S}$ °नुमाद्या.

अग्निः सुभगां जातवेदाः पत्ये पत्नीं जरदष्टिं कृणोतु ॥ ४९ ॥

देवः । ते । सविता । हस्तम् । गृह्णातु । सोमः । राजा । सुऽप्रजसम् । कृणोतु ।
अग्निः । सुऽभगाम् । जातऽवेदाः । पत्ये । पत्नीम् । जरत्ऽअष्टिम् । कृणोतु ॥ ४९ ॥

गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ५० ॥ (५)

गृह्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।
भगः । अर्यमा । सविता । पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ५० ॥ (५)

भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् ।
पत्नी त्वमसि धर्मणाहं गृहपतिस्तव ॥ ५१ ॥

भगः । ते । हस्तम् । अग्रहीत् । सविता । हस्तम् । अग्रहीत् ।
पत्नी । त्वम् । असि । धर्मणा । अहम् । गृहऽपतिः । तव ॥ ५१ ॥

ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पतिः ।
मया पत्या प्रजावति सं जीव शरदः शतम् ॥ ५२ ॥

मम । इयम् । अस्तु । पोष्या । मह्यम् । त्वा । अदात् । बृहस्पतिः ।
मया । पत्या । प्रजाऽवति । सम् । जीव । शरदः । शतम् ॥ ५२ ॥

त्वष्टा वासो व्यदधाच्छुभे कं बृहस्पतेः प्रशिषा कवीनाम् ।
तेनेमां नारीं सविता भगश्च सूर्यामिव परि धत्तां प्रजया ॥ ५३ ॥

त्वष्टा । वासः । वि । अदधात् । शुभे । कम् । बृहस्पतेः । प्रऽशिषा । कवीनाम् ।
तेन । इमाम् । नारीम् । सविता । भगः । च । सूर्याम्ऽइव । परि । धत्ताम् । प्रऽजया ॥ ५३ ॥

इन्द्राग्नी द्यावापृथिवी मातरिश्वा मित्रावरुणा भगो अश्विनोभा ।
बृहस्पतिर्मरुतो ब्रह्म सोम इमां नारीं प्रजया वर्धयन्तु ॥ ५४ ॥

इन्द्राग्नी इति । द्यावापृथिवी इति । मातरिश्वा । मित्रावरुणा । भगः । अश्विना । उभा ।
बृहस्पतिः । मरुतः । ब्रह्म । सोमः । इमाम् । नारीम् । प्रऽजया । वर्धयन्तु ॥ ५४ ॥

---

१ P °प्रजस° I. २ B[h] D K K[m] S[m] V Cs °यथासत्, (K uncertain). Dc यथासः changed to यथासत्. We with A C E R P P[2] J Cp. ३ C E R S[m] P J Cp प्रजावति. A B B[h] Cs प्रजावती. We with D K K[m] V Dc P[2]. ४ K[m] °छुंभे.

बृहस्पतिः प्रथमः सूर्यायाः शीर्षे केशाँ अकल्पयत् ।
तेनेमामश्विना नारीं पत्ये सं शोभयामसि ॥ ५५ ॥

बृहस्पतिः । प्रथमः । सूर्यायाः । शीर्षे । केशान् । अकल्पयत् ।
तेन । इमाम् । अश्विना । नारीम् । पत्ये । सम् । शोभयामसि ॥ ५५ ॥

इदं तद्रूपं यदवस्त योषा जायां जिज्ञासे मनसा चरन्तीम् ।
तामन्वर्तिष्ये सखिभिर्नवग्वैः क इमान् विद्वान् वि चचर्त पाशान् ॥ ५६ ॥

इदम् । तत् । रूपम् । यत् । अवस्त । योषा । जायाम् । जिज्ञासे । मनसा । चरन्तीम् ।
ताम् । अनु । अर्तिष्ये । सखिऽभिः । नवऽग्वैः । कः । इमान् । विद्वान् । वि । चचर्त । पाशान् ॥ ५६ ॥

अहं वि ष्यामि मयि रूपमस्या वेददित् पश्यन् मनसः कुलायम् ।
न स्तेयमद्मि मनसोदमुच्ये स्वयं श्रथ्नानो वरुणस्य पाशान् ॥ ५७ ॥

अहम् । वि । स्यामि । मयि । रूपम् । अस्याः । वेदत् । इत् । पश्यन् । मनसः । कुलायम् ।
न । स्तेयम् । अद्मि । मनसा । उत् । अमुच्ये । स्वयम् । श्रथ्नानः । वरुणस्य । पाशान् ॥ ५७ ॥

प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवाः ।
उरुं लोकं सुगमत्र पन्थां कृणोमि तुभ्यं सहपत्न्यै वधु ॥ ५८ ॥

प्र । त्वा । मुञ्चामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवाः ।
उरुम् । लोकम् । सुऽगम् । अत्र । पन्थाम् । कृणोमि । तुभ्यम् । सहऽपत्न्यै । वधु ॥ ५८ ॥

उद्यच्छध्वमप रक्षो हनाथेमां नारीं सुकृते दधात ।
धाता विपश्चित् पतिमस्यै विवेद भगो राजा पुर एतु प्रजानन् ॥ ५९ ॥

उत् । यच्छध्वम् । अप । रक्षः । हनाथ । इमाम् । नारीम् । सुऽकृते । दधात ।
धाता । विपःऽचित् । पतिम् । अस्यै । विवेद । भगः । राजा । पुरः । एतु । प्रऽजानन् ॥ ५९ ॥

भगस्ततक्ष चतुरः पादान् भगस्ततक्ष चत्वार्युष्पलानि ।

---

१ $\overset{m}{\text{K}}$ कर्शाँ. E R केशाँ. २ A E कुलायन्. ३ $\overset{m}{\text{K}}$ श्रथानो. K श्रश्नानो. ४ P पश्यन्. We with $\overset{2}{\text{P}}$ J Cp. ५ So we with all our authorities. See Rw.

त्वष्टा पिपेश मध्यतोनु वर्ध्रान्त्सा नो अस्तु सुमङ्गली ॥ ६० ॥

भगः । ततक्ष । चतुरः । पादान् । भगः । ततक्ष । चत्वारि । उष्पलानि ।

त्वष्टा । पिपेश । मध्यतः । अनु । वर्ध्रान् । सा । नः । अस्तु । सुऽमङ्गली ॥ ६० ॥

सुकिंशुकं वहतुं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।

आ रोह सूर्ये अमृतस्य लोकं स्योनं पतिभ्यो वहतुं कृणु त्वम् ॥ ६१ ॥

सुऽकिंशुकम् । वहतुम् । विश्वऽरूपम् । हिरण्यऽवर्णम् । सुऽवृतम् । सुऽचक्रम् ।

आ । रोह । सूर्ये । अमृतस्य । लोकम् । स्योनम् । पतिऽभ्यः । वहतुम् । कृणु । त्वम् ॥ ६१ ॥

अभ्रातृघ्नीं वरुणापशुघ्नीं बृहस्पते ।

इन्द्रापतिघ्नीं पुत्रिणीमास्मभ्यं सवितर्वह ॥ ६२ ॥

अभ्रातृऽघ्नीम् । वरुण । अपशुऽघ्नीम् । बृहस्पते ।

इन्द्र । अपतिऽघ्नीम् । पुत्रिणीम् । आ । अस्मभ्यम् । सवितः । वह ॥ ६२ ॥

मा हिंसिष्टं कुमार्यं१ स्थूणे देवकृते पथि ।

शालाया देव्या द्वारं स्योनं कृण्मो वधूपथम् ॥ ६३ ॥

मा । हिंसिष्टम् । कुमार्यम् । स्थूणे इति । देवऽकृते । पथि ।

शालायाः । देव्याः । द्वारम् । स्योनम् । कृण्मः । वधूऽपथम् ॥ ६३ ॥

ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः ।

अनाव्याधां देवपुरां प्रपद्य शिवा स्योना पतिलोके वि राज ॥६४॥(६)

ब्रह्म । अपरम् । युज्यताम् । ब्रह्म । पूर्वम् । ब्रह्म । अन्ततः । मध्यतः । ब्रह्म । सर्वतः ।

अनाव्याधाम् । देवऽपुराम् । प्रऽपद्य । शिवा । स्योना । पतिऽलोके । वि । राज ॥ ६४ ॥ (६)

प्रथमेनुवाके प्रथमं सूक्तम् ॥

इति प्रथमोनुवाकः ॥

---

१ A वध्रान्त्सा. K K[m] °र्ध्रा°. B[h] °द्ध्रा°. B seems to correct to °ध्री°. We with C D E R S[m] V Dc Cs P P[2] J Cp. २ So we with all our authorities. See Rw. ३ P सूर्ये ।. ४ S[m] °तुघ्नी. ५ B corrects to सवितुर्वह. ६ B B[h] D K[m] R S[m] Cs ३ for १ We with C K V Dc. ७ P °र्याम् ।. P[2] °र्यं (omitting म्). We with J Cp. ८ A B B[h] Cs शिवां. We with C D E K K[m] R S[m] V Dc.

तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ।
स नः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ १ ॥
तुभ्यम् । अग्रे । परि । अवहन् । सूर्याम् । वहतुना । सह ।
सः । नः । पतिऽभ्यः । जायाम् । दाः । अग्ने । प्रऽजया । सह ॥ १ ॥
पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ २ ॥
पुनः । पत्नीम् । अग्निः । अदात् । आयुषा । सह । वर्चसा ।
दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति । शरदः । शतम् ॥ २ ॥
सोमस्य जाया प्रथमं गन्धर्वस्तेपरः पतिः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ३ ॥
सोमस्य । जाया । प्रथमम् । गन्धर्वः । ते । अपरः । पतिः ।
तृतीयः । अग्निः । ते । पतिः । तुरीयः । ते । मनुष्यऽजाः ॥ ३ ॥
सोमो ददद् गन्धर्वाय गन्धर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ४ ॥
सोमः । ददत् । गन्धर्वाय । गन्धर्वः । ददत् । अग्नये ।
रयिम् । च । पुत्रान् । च । अदात् । अग्निः । मह्यम् । अथो इति । इमाम् ॥ ४ ॥
आ वामगन्त्सुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामा अरंसत ।
अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्याँ अशीमहि ॥ ५ ॥
आ । वाम् । अगन् । सुऽमतिः । वाजिनीवसू इति वाजिनीऽवसू । नि । अश्विना । हृत्ऽसु । कामाः । अरंसत ।
अभूतम् । गोपा । मिथुना । शुभः । पती इति । प्रियाः । अर्यम्णः । दुर्यान् । अशीमहि ॥ ५ ॥
सा मन्दसाना मनसा शिवेन रयिं धेहि सर्ववीरं वचस्यम् ।
सुगं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथिष्ठामप दुर्मतिं हतम् ॥ ६ ॥

---

१ So we with all our authorities and rightly as अग्ने (to be pronounced अग्गने) begins the pâda. Only P has दाः । अग्ने ।. Dc दा अग्ने changed to दा अग्ने. All others दा अग्ने. Thus the accent though doubtful is that of all reliable MSS. and Vaidikas. २ P जाया ।. ३ B^h न्यश्विना.

सा । मन्दसाना । मनसा । शिवेन । रयिम् । धेहि । सर्वऽवीरम् । वचस्यम् ।
सुऽगम् । तीर्थम् । सुऽप्रपानम् । शुभः । पती इति । स्थाणुम् । पथिऽस्थाम् । अप ।
दुःऽमतिम् । हतम् ॥ ६ ॥

या ओषधयो या नद्यो३ यानि क्षेत्राणि या वना ।
तास्त्वा वधु प्रजावतीं पत्ये रक्षन्तु रक्षसः ॥ ७ ॥

याः । ओषधयः । याः । नद्यः । यानि । क्षेत्राणि । या । वना ।
ताः । त्वा । वधु । प्रजाऽवतीम् । पत्ये । रक्षन्तु । रक्षसः ॥ ७ ॥

एमं पन्थामरुक्षाम सुगं स्वस्तिवाहनम् ।
यस्मिन् वीरो न रिष्यत्यन्येषां विन्दते वसु ॥ ८ ॥

आ । इमम् । पन्थाम्[1] । अरुक्षाम । सुऽगम् । स्वस्तिऽवाहनम् ।
यस्मिन् । वीरः । न । रिष्यति । अन्येषाम् । विन्दते । वसु ॥ ८ ॥

इदं सु मे नरः शृणुत ययाशिषा दंपती वाममश्नुतः ।
ये गन्धर्वा अप्सरसश्च देवीरेषु वानस्पत्येषु येधि तस्थुः ।
स्योनास्ते[2] अस्यै वध्वै भवन्तु मा हिंसिषुर्वहतुमुह्यमानम्[3] ॥ ९ ॥

इदम् । सु । मे । नरः । शृणुत । यया । आऽशिषा । दंपती इति दम्ऽपती । वामम् । अश्नुतः ।
ये । गन्धर्वाः । अप्सरसः । च । देवीः । एषु । वानस्पत्येषु । ये । अधि । तस्थुः ।
स्योनाः । ते[2] । अस्यै । वध्वै । भवन्तु । मा । हिंसिषुः । वहतुम् । उह्यमानम् ॥ ९ ॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ[4] अनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥ १० ॥ (७)

ये । वध्वः । चन्द्रम् । वहतुम् । यक्ष्माः । यन्ति । जनान् । अनु ।
पुनः । तान् । यज्ञियाः[5] । देवाः । नयन्तु । यतः । आऽगताः ॥ १० ॥ (७)

मा विदन् परिपन्थिनो य आसीदन्ति दंपती ।
सुगेन दुर्गमतीतामप द्रान्त्वरातयः ॥ ११ ॥

---

१ P P[2] पथाम् । २ So we with all our MSS. and Vaidikas. The first two lines have to be construed together and the third independently, addressed to the bride. See Rw. ३ B C °मुह्यमानम्. ४ E R जनैं. ५ P P[2] J यज्ञियां । We with Cp.

३९

मा । विदन् । परिऽपन्थिनः । ये । आऽसीदन्ति । दंपती इति दम्ऽपती ।
सुऽगेन । दुःऽगम् । अति । इताम् । अप । द्रान्तु । अरातयः ॥ ११ ॥

**सं काशयामि वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मित्रियेण ।**
**पर्याणद्धं[1] विश्वरूपं यदस्ति स्योनं पतिभ्यः सविता तत् कृणोतु ॥ १२ ॥**

सम् । काशयामि । वहतुम् । ब्रह्मणा । गृहैः । अघोरेण । चक्षुषा । मित्रियेण ।
परिऽआनद्धम् । विश्वऽरूपम् । यत् । अस्ति । स्योनम् । पतिऽभ्यः । सविता । तत् । कृ-
णोतु ॥ १२ ॥

**शिवा नारीयमस्तमागन्निमं धाता लोकमस्यै दिदेश ।**
**तामर्यमा भगो अश्विनोभा प्रजापतिः प्रजया वर्धयन्तु ॥ १३ ॥**

शिवा । नारी । इयम् । अस्तम् । आ । अगन् । इमम् । धाता । लोकम् । अस्यै । दिदेश ।
ताम् । अर्यमा । भगः । अश्विना । उभा । प्रजाऽपतिः । प्रऽजया । वर्धयन्तु[2] ॥ १३ ॥

**आत्मन्वत्युर्वरा नारीयमागन् तस्यां नरो वपत बीजमस्याम्[3] ।**
**सा वः प्रजां जनयद् वक्षणाभ्यो बिभ्रती दुग्धमृषभस्य रेतः ॥ १४ ॥**

आत्मन्ऽवती । उर्वरा[4] । नारी । इयम् । आ । अगन् । तस्याम् । नरः । वपत । बीजम् ।
अस्याम्[3] ।
सा । वः । प्रऽजाम् । जनयत् । वक्षणाभ्यः । बिभ्रती । दुग्धम् । ऋषभस्य । रेतः ॥ १४ ॥

**प्रति तिष्ठ विराडसि विष्णुरिवेह सरस्वति ।**
**सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥ १५ ॥**

प्रति । तिष्ठ । विऽराट् । असि । विष्णुःऽइव । इह । सरस्वति ।
सिनीवालि । प्र । जायताम् । भगस्य । सुऽमतौ । असत् ॥ १५ ॥

**उद् व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।**
**मादुष्कृतौ[6] व्येनसावघ्न्यावशुनमारताम्[7] ॥ १६ ॥**

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।

---

१ B corrects °र्ण° to °न°. A B^h K R V Dc Cs °न°. We with C D E K^m S^m. २ P वर्धयतु ।. ३ K K^m V P P^2 बीजमस्याम्. Dc °मस्यां changed to °मस्यां. ४ P उर्वरी ।. ५ S^m शम्याः. ६ B °दुःकृतौ. Cs दुःष्कृतौ. ७ D व्येन°.

मा । अदुःऽकृतौ । विऽपनसौ । अघ्न्यौ । अशुनम् । आ । अरताम् ॥ १६ ॥

अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः ।
वीरसूर्देवृकामा सं त्वयैधिषीमहि सुमनस्यमाना ॥ १७ ॥

अघोरऽचक्षुः । अपतिऽघ्नी । स्योना । शग्मा । सुऽशेवा । सुऽयमा । गृहेभ्यः ।
वीरऽसूः । देवृऽकामा । सम् । त्वया । एधिषीमहि । सुऽमनस्यमाना ॥ १७ ॥

अदेवृघ्न्यपतिघ्नीहैधि शिवा पशुभ्यः सुयमा सुवर्चाः ।
प्रजावती[1] वीरसूर्देवृकामा स्योनेममग्निं गार्हपत्यं सपर्य ॥ १८ ॥

अदेवृऽघ्नी । अपतिऽघ्नी । इह । एधि । शिवा । पशुऽभ्यः । सुऽयमा । सुऽवर्चाः ।
प्रजाऽवती । वीरऽसूः । देवृऽकामा । स्योना । इमम् । अग्निम् । गार्हऽपत्यम् । सपर्य ॥ १८ ॥

उत्तिष्ठेतः किमिच्छन्तीदमागा अहं त्वेडे अभिभूः स्वाद् गृहात् ।
शून्यैषी निर्ऋते याजगन्धो[2]त्तिष्ठाराते[3] प्र पत मेह रंस्थाः ॥ १९ ॥

उत् । तिष्ठ । इतः । किम् । इच्छन्ती । इदम् । आ । अगाः । अहम् । त्वा । ईडे । अभिऽभूः । स्वात् । गृहात् ।
शून्यऽएषी । निःऽऋते । या । आऽजगन्थ[3] । उत् । तिष्ठ । अराते । प्र । पत । मा । इह । रंस्थाः ॥ १९ ॥

यदा गार्हपत्यमसपर्यैत्[4] पूर्वमग्निं वधूरियम् ।
अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु ॥ २० ॥ (८)

यदा । गार्हऽपत्यम् । असपर्यैत् । पूर्वम् । अग्निम् । वधूः । इयम् ।
अध । सरस्वत्यै । नारि । पितृऽभ्यः । च । नमः । कुरु ॥ २० ॥ (८)

शर्म वर्मैतदा हरास्यै नार्या उपस्तरे ।
सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥ २१ ॥

शर्म । वर्म । एतत् । आ । हर । अस्यै । नार्यै । उपऽस्तरे ।
सिनीवालि । प्र । जायताम् । भगस्य । सुऽमतौ । असत् ॥ २१ ॥

यं बल्बजं न्यस्यथ चर्म चोपस्तृणीथन ।

---

१ C K^m प्रजावतीर्वीरसूर्देवृ॰. २ E ॰च्च॰. ३ So we with all our MSS and Vaidikas.
४ C ॰मसपर्यैतत्पू॰.

तदा रोहतु सुप्रजा या कन्या विन्दते पतिम् ॥ २२ ॥

यम् । बल्बजम् । निऽअस्यथ । चर्म । च । उपऽस्तृणीथन ।
तत् । आ । रोहतु । सुऽप्रजाः । या । कन्या । विन्दते । पतिम् ॥ २२ ॥

उप स्तृणीहि बल्बजमधि चर्मणि रोहिते ।
तत्रोपविश्य सुप्रजा इममग्निं सपर्यतु ॥ २३ ॥

उप । स्तृणीहि । बल्बजम् । अधि । चर्मणि । रोहिते ।
तत्र । उपऽविश्य । सुऽप्रजाः । इमम् । अग्निम् । सपर्यतु ॥ २३ ॥

आ रोह चर्मोप सीदाग्निमेष देवो हन्ति रक्षांसि सर्वा ।
इह प्रजां जनय पत्ये अस्मै सुज्यैष्ठ्यो भवत् पुत्रस्त एषः ॥ २४ ॥

आ । रोह । चर्म । उप । सीद । अग्निम् । एषः । देवः । हन्ति । रक्षांसि । सर्वा ।
इह । प्रऽजाम् । जनय । पत्ये । अस्मै । सुऽज्यैष्ठ्यः । भवत् । पुत्रः । ते । एषः ॥ २४ ॥

वि तिष्ठन्तां मातुरस्या उपस्थान्नानारूपाः पशवो जायमानाः ।
सुमङ्गल्युप सीदेममग्निं संपत्नी प्रति भूषेह देवान् ॥ २५ ॥

वि । तिष्ठन्ताम् । मातुः । अस्याः । उपऽस्थात् । नानाऽरूपाः । पशवः । जायमानाः ।
सुऽमङ्गली । उप । सीद । इमम् । अग्निम् । सम्ऽपत्नी । प्रति । भूष । इह । देवान् ॥ २५ ॥

सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः ।
स्योना श्वश्रवै प्र गृहान् विशेमान् ॥ २६ ॥

सुऽमङ्गली । प्रऽतरणी । गृहाणाम् । सुऽशेवा । पत्ये । श्वशुराय । शम्ऽभूः ।
स्योना । श्वश्रवै । प्र । गृहान् । विश । इमान् ॥ २६ ॥

स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव ॥ २७ ॥

स्योना । भव । श्वशुरेभ्यः । स्योना । पत्ये । गृहेभ्यः ।
स्योना । अस्यै । सर्वस्यै । विशे । स्योना । पुष्टाय । एषाम् । भव ॥ २७ ॥

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा दौर्भाग्यैर्विपरेतन ॥ २८ ॥

---

१ C संपर्यत. २ K अस्मै. ३ P P सर्वाः ।. ४ P अस्याः ।.

सुऽमङ्गलीः। इयम्। वधूः। इमाम्। सम्ऽएत। पश्यत।
सौभाग्यम्। अस्यै। दत्त्वा। दौःऽभाग्यैः। विऽपरेतन॥ २८॥

**या दुर्हार्दो युवतयो याश्चेह जरतीरपि।**
**वर्चो न्व१स्यै सं दत्ताथास्तं विपरेतन॥ २९॥**

याः। दुःऽहार्दः। युवतयः। याः। च। इह। जरतीः। अपि।
वर्चः। नु। अस्यै। सम्। दत्त। अथ। अस्तम्। विऽपरेतन॥ २९॥

**रुक्मप्रस्तरणं वह्यं विश्वा रूपाणि बिभ्रतम्।**
**आरोहत् सूर्या सावित्री बृहते सौभगाय कम्॥ ३०॥ (५)**

रुक्मऽप्रस्तरणम्। वह्यम्। विश्वा। रूपाणि। बिभ्रतम्।
आ। अरोहत्। सूर्या। सावित्री। बृहते। सौभगाय। कम्॥ ३०॥ (५)

**आ रोह तल्पं सुमनस्यमानेह प्रजां जनय पत्ये अस्मै।**
**इन्द्राणीव सुबुधा बुध्यमाना ज्योतिरग्रा उषसः प्रति जागरासि॥ ३१॥**

आ। रोह। तल्पम्। सुऽमनस्यमाना। इह। प्रऽजाम्। जनय। पत्ये। अस्मै।
इन्द्राणीऽइव। सुऽबुधा। बुध्यमाना। ज्योतिःऽअग्राः। उषसः। प्रति। जागरासि॥ ३१॥

**देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्व१स्तनूभिः।**
**सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या सं भवेह॥ ३२॥**

देवाः। अग्रे। नि। अपद्यन्त। पत्नीः। सम्। अस्पृशन्त। तन्वः। तनूभिः।
सूर्याऽइव। नारि। विश्वऽरूपा। महिऽत्वा। प्रजाऽवती। पत्या। सम्। भव। इह॥ ३२॥

**उत्तिष्ठेतो विश्वावसो नमसेडामहे त्वा।**
**जामिमिच्छ पितृषदं न्यक्तां स ते भागो जनुषा तस्य विद्धि॥ ३३॥**

---

१ All our authorities have जरती° (pada जरतीः।), which is not inadmissible as जरतीः may well be a vocative. २ A B[h] D E K[m] R S[m] Dc Cs ३ for १. We with C K V. ३ S[m] °स्थं विप°. P अस्तम्।. ४ P अस्यै।. ५ C D S[m] P[2] रुक्मप्रस्तरणं. We with A B B[h] E K K[m] R V Dc Cs P J Cp. Rw have changed the accent to रुक्मप्रस्तरणं, but that does not appear necessary as the compound should be taken as a shashthî-tatpurusha in the sense of a 'conch [made] of gold.' ६ P जागरसि।. We with P[2] J Cp. ७ So we with all our authorities except C which reads न्यक्तिं. See Rw.

उत् । तिष्ठ । इतः । विश्वऽवसो इति विश्वऽवसो । नमसा । ईडामहे । त्वा ।
जामिम् । इच्छ । पितृऽसदम् । निऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥ ३३ ॥

**अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च ।**
**तास्ते जनित्रमभि ताः परेहि नमस्ते गन्धर्वर्तुना कृणोमि ॥ ३४ ॥**

अप्सरसः । सधऽमादम् । मदन्ति । हविःऽधानम् । अन्तरा । सूर्यम् । च ।
ताः । ते । जनित्रम् । अभि । ताः । परा । इहि । नमः । ते । गन्धर्वऽऋतुना । कृणोमि ॥ ३४ ॥

**नमो गन्धर्वस्य नमसे नमो भामाय चक्षुषे च कृण्मः ।**
**विश्वावसो ब्रह्मणा ते नमोभि जाया अप्सरसः परेहि ॥ ३५ ॥**

नमः । गन्धर्वस्य । नमसे । नमः । भामाय । चक्षुषे । च । कृण्मः ।
विश्वऽवसो इति विश्वऽवसो । ब्रह्मणा । ते । नमः । अभि । जायाः । अप्सरसः । परा । इहि ॥३५॥

**राया वयं सुमनसः स्यामोदितो गन्धर्वमावीवृताम ।**
**अगन्त्स देवः परमं सधस्थमगन्म यत्र प्रतिरन्त आयुः ॥ ३६ ॥**

राया । वयम् । सुऽमनसः । स्याम । उत् । इतः । गन्धर्वम् । आ । अवीवृताम ।
अगन् । सः । देवः । परमम् । सधऽस्थम् । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ ३६ ॥

**सं पितरावृत्विये सृजेथां माता पिता च रेतसो भवाथः ।**
**मर्य इव योषामधिरोहयैनां प्रजां कृण्वाथामिह पुष्यतं रयिम् ॥ ३७ ॥**

सम् । पितरौ । ऋत्विये इति । सृजेथाम् । माता । पिता । च । रेतसः । भवाथः ।
मर्यःऽइव । योषाम् । अधि । रोहय । एनाम् । प्रऽजाम् । कृण्वाथाम् । इह । पुष्यतम् । रयिम् ॥ ३७ ॥

**तां पूषं छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।**
**या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहरेम शेपः ॥ ३८ ॥**

ताम् । पूषन् । शिवऽतमाम् । आ । ईरयस्व । यस्याम् । बीजम् । मनुष्याः । वपन्ति ।

---

१ See note 7, page 309. २ K^m नमोभिर्जाया. B नमोभिजाया. ३ A C. पुष्यतां. Cp पुष्यतां । changed to पुष्यतं ।. ४ So P̊ P J Cp. Would not the locative be preferable? See foot-note to XII. 3. 29. ५ P एनाम् ।. ६ So we with A B B^h C D E K K^m R S^m V Dc Cs. P̊ P पूर्षम् ।. P Cp पूषन् ।. J पूषन् । changed to पूषन् ।. Rw have changed the accent to पूषं in conformity with the *Rgveda*. ७ K °मुश्रयाति.

या। नः। ऊरू इति। उशती। विऽश्रयाति। यस्याम्। उशन्तः। प्रऽहरेम। शेपः॥ ३८॥

आ रोहोरुमुप धत्स्व हस्तं परि ष्वजस्व जायां सुमनस्यमानः।
प्रजां कृण्वाथामिह मोदमानौ दीर्घं वामायुः सविता कृणोतु॥ ३९॥

आ। रोह। ऊरुम्। उप। धत्स्व। हस्तम्। परि। स्वजस्व। जायाम्। सुऽमनस्यमानः।
प्रऽजाम्। कृण्वाथाम्। इह। मोदमानौ। दीर्घम्। वाम्। आयुः। सविता। कृणोतु॥ ३९॥

आ वां प्रजां जनयतु प्रजापतिरहोरात्राभ्यां समनक्त्वर्यमा।
अदुर्मङ्गली पतिलोकमा विशेमं शं नो भव द्विपदे शं चतुष्पदे॥४०॥(१०

आ। वाम्। प्रऽजाम्। जनयतु। प्रजाऽपतिः। अहोरात्राभ्याम्। सम्। अनक्तु। अर्यमा।
अदुःऽमङ्गली। पतिऽलोकम्। आ। विश। इमम्। शम्। नः। भव। द्विऽपदे[१]। शम्।
चतुःऽपदे॥ ४०॥ (१०)

देवैर्दत्तं मनुना साकमेतद् वाधूयं वासो वध्वश्च वस्त्रम्।
यो ब्रह्मणे चिकितुषे ददाति स इद् रक्षांसि तल्पानि हन्ति॥ ४१॥

देवैः। दत्तम्। मनुना। साकम्। एतत्। वाधूऽयम्। वासः। वध्वः। च। वस्त्रम्।
यः। ब्रह्मणे। चिकितुषे। ददाति। सः। इत्। रक्षांसि। तल्पानि। हन्ति॥ ४१॥

यं मे[२] दत्तो ब्रह्मभागं वधूयोर्वाधूयं वासो वध्वश्च वस्त्रम्।
युवं ब्रह्मणेनुमन्यमानौ बृहस्पते साकमिन्द्रश्च दत्तम्॥ ४२॥

यम्। मे। दत्तः। ब्रह्मऽभागम्। वधूऽयोः। वाधूऽयम्। वासः। वध्वः। च। वस्त्रम्।
युवम्। ब्रह्मणे। अनुऽमन्यमानौ। बृहस्पते। साकम्। इन्द्रः। च। दत्तम्॥ ४२॥

स्योनाद्योनेरधि बुध्यमानौ हसामुदौ महसा मोदमानौ।
सुगू सुपुत्रौ सुगृहौ तराथो[३] जीवावुषसो विभातीः॥ ४३॥

स्योनात्। योनेः। अधि। बुध्यमानौ। हसामुदौ। महसा। मोदमानौ।
सुगू इति सुऽगू। सुऽपुत्रौ। सुऽगृहौ। तराथः। जीवौ। उषसः। विऽभातीः॥ ४३॥

नवं वसानः सुरभिः सुवासा उदागां जीव उषसो विभातीः।
आण्डात् पतत्रीवामुक्षि विश्वस्मादेनसस्परि॥ ४४॥

---

१ P द्विपदें।. २ K[m] Cs यन्मे. Dc यन्मे changed to यं मे. ३ DEKDc चराथो. Cs तरथो.

नवम् । वसानः । सुरभिः । सुऽवासाः । उत्ऽआगाम् । जीवः । उषसः । विऽभातीः ।
आ । अण्डात् । पतत्रीऽइव । अमुक्षि । विश्वस्मात् । एनसः । परि ॥ ४४ ॥

**शुम्भनी द्यावापृथिवी अन्तिसुम्ने महिव्रते ।**
**आपः सप्त सुस्रुवुर्देवीस्ता नो मुञ्चन्त्वंहसः ॥ ४५ ॥**

शुम्भनी इति । द्यावापृथिवी इति । अन्तिसुम्ने इत्यन्तिऽसुम्ने । महिव्रते इति महिऽव्रते ।
आपः । सप्त । सुस्रुवुः । देवीः । ताः । नः । मुञ्चन्तु । अंहसः ॥ ४५ ॥

**सूर्यायै देवेभ्यो मित्राय वरुणाय च ।**
**ये भूतस्य प्रचेतसस्तेभ्य इदमकरं नमः ॥ ४६ ॥**

सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च ।
ये । भूतस्य । प्रऽचेतसः । तेभ्यः । इदम् । अकरम् । नमः ॥ ४६ ॥

**य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।**
**संधाता संधिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ ४७ ॥**

यः । ऋते । चित् । अभिऽश्रिषः । पुरा । जत्रुऽभ्यः । आऽतृदः ।
सम्ऽधाता । सम्ऽधिम् । मघऽवा । पुरुऽवसुः । निःऽकर्ता । विऽह्रुतम् । पुनः ॥ ४७ ॥

**अपास्मत् तम उच्छतु नीलं पिशङ्गमुत लोहितं यत् ।**
**निर्दहनी या पृषातक्य१स्मिन् तां स्थाणावध्या सजामि ॥ ४८ ॥**

अप । अस्मत् । तमः । उच्छतु । नीलम् । पिशङ्गम् । उत । लोहितम् । यत् ।
निःऽदहनी । या । पृषातकी । अस्मिन् । ताम् । स्थाणौ । अधि । आ । सजामि ॥ ४८ ॥

**यावतीः कृत्या उपवासने यावन्तो राज्ञो वरुणस्य पाशाः ।**
**व्यृद्धयो या असमृद्धयो या अस्मिन् ता स्थाणावधि सादयामि ॥ ४९ ॥**

यावतीः । कृत्याः । उपऽवासने । यावन्तः । राज्ञः । वरुणस्य । पाशाः ।
विऽऋद्धयः । याः । असम्ऽऋद्धयः । याः । अस्मिन् । ताः । स्थाणौ । अधि । सादयामि ॥ ४९ ॥

---

१ E °श्रृषः. २ K K̈ C D S̈ V जतृभ्य. C॰ जरुभ्य. Dc जत्रु° changed to जतृ°. P जत्तु°। . Cp जतृभ्यः। . We with A B B̈ E R J P. ३ B̈ K̈ R पुरुवसु°. ४ C °निः-कर्ता. ५ P °धत्ता। . ६ A C D E K K̈ R S̈ V Dc °कय३° B̈ C॰ °कया३°. ७ P उच्छंतु। . ८ E पाशात्. ९ A C °तां. B D R S̈ Dc °ताः. We with B̈ E K K̈ V C॰

या मे प्रियतमा तनूः सा मे बिभाय वासंसः।
तस्याग्रे त्वं वनस्पते नीविं कृणुष्व मा वयं रिषाम[1] ॥ ५० ॥ (११)

या। मे। प्रियऽतमा। तनूः। सा। मे। बिभाय। वासंसः।
तस्य। अग्रे। त्वम्। वनस्पते। नीविम्। कृणुष्व। मा। वयम्। रिषाम ॥ ५० ॥ (११)

ये अन्ता यावतीः सिचो य ओतवो ये च तन्तवः।
वासो यत् पत्नीभिरुतं तन्नः स्योनमुप स्पृशात् ॥ ५१ ॥

ये। अन्ताः। यावतीः। सिचः। ये। ओतवः। ये। च। तन्तवः।
वासः। यत्। पत्नीभिः। उतम्। तत्। नः। स्योनम्। उप। स्पृशात् ॥ ५१ ॥

उशतीः कन्यला इमाः पितृलोकात् पतिं यतीः[2]।
अव दीक्षामसृक्षत स्वाहा ॥ ५२ ॥

उशतीः। कन्यलाः। इमाः। पितृऽलोकात्। पतिम्। यतीः[2]
अव। दीक्षाम्। असृक्षत। स्वाहा ॥ ५२ ॥

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन्।
वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥ ५३ ॥

बृहस्पतिना। अवऽसृष्टाम्। विश्वे। देवाः। अधारयन्।
वर्चः। गोषु। प्रऽविष्टम्। यत्। तेन। इमाम्। सम्। सृजामसि ॥ ५३ ॥

बृहस्पतिना०।
तेजो गोषु प्रविष्टं यत् तेन० ॥ ५४ ॥

०॥ तेजः। गोषु। प्रऽविष्टम्। यत्। तेन।० ॥ ५४ ॥

बृहस्पतिना०।
भगो गोषु प्रविष्टो यस्तेन० ॥ ५५ ॥

०॥ भगः। गोषु। प्रऽविष्टः। यः। तेन।० ॥ ५५ ॥

बृहस्पतिना०।
यशो गोषु प्रविष्टं यत् तेन० ॥ ५६ ॥

---

१ E रिशाम. २ All our authorities have पतिंयतीः, the Pada-authorities reading पतिम्। यतीः।.

०॥ यशः । गोषु । प्रऽविष्टम् । यत् । तेन ।० ॥ ५६ ॥

बृहस्पतिना० ।

पयो गोषु प्रविष्टं यत तेन० ॥ ५७ ॥

०॥ पयः । गोषु । प्रऽविष्टम् । यत् । तेन ।० ॥ ५७ ॥

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।

रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ॥ ५८ ॥

बृहस्पतिना[१] । अवऽसृष्टाम् । विश्वे । देवाः । अधारयन् ।

रसः । गोषु । प्रऽविष्टः । यः । तेन । इमाम् । सम् । सृजामसि ॥ ५८ ॥

यदीमे केशिनो जना गृहे ते समनर्तिषू रोदेन कृण्वन्तो[२]ऽघम् ।

अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ॥ ५९ ॥

यदि । इमे । केशिनः । जनाः । गृहे । ते । सम्ऽअनर्तिषुः । रोदेन । कृण्वन्तः[२] । अघम् ।

अग्निः । त्वा । तस्मात् । एनसः । सविता । च । प्र । मुञ्चताम् ॥ ५९ ॥

यदीयं दुहिता तव विकेश्यरुदद् गृहे रोदेन कृण्वत्य[३]घम् ।

अग्निष्ट्वा० ॥ ६० ॥ (१२)

यदि । इयम् । दुहिता । तव । विऽकेशी । अरुदत् । गृहे । रोदेन । कृण्वती । अघम् ॥० ॥ ६० ॥ (१२)

यज्जामयो यद्युवतयो गृहे ते समनर्तिषू रोदेन कृण्वतीरघम् ।

अग्निष्ट्वा० ॥ ६१ ॥

यत् । जामयः । यत् । युवतयः । गृहे । ते । सम्ऽअनर्तिषुः । रोदेन । कृण्वतीः । अघम् ॥० ॥ ६१ ॥

यत् ते प्रजायां पशुषु यद्वा गृहेषु निष्ठित[४]मघकृद्भिरघं कृतम् ।

१ P P[2] बृहस्पतिना ।. २ A K १ for ३. None of our authorities read कृण्वन्तोघम्; only P[2] has कृण्वन्तः ।, and Dc has changed कृण्वंतो३घं to कृण्वंतो३घं. The MSS. of Rw. also read कृण्वन्तः (see their *Index*). This reading, therefore, appears ancient, traditional and general. It is likely the wrong accent and the kampa were introduced from false anology with कृण्वत्यं१घम् in the next verse. ३ A C D E K[m] R S[m] Dc Cs ३ for १. We with B[h] K V. ४ B R निष्ठितमघ°. C निष्ठितमघ° changed to निष्ठितमघ°.

अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ॥ ६२ ॥

यत् । ते । प्रऽजायाम् । पशुषु । यत् । वा । गृहेषु । निऽस्थितम् । अघकृत्ऽभिः । अघम् । कृतम् ।

अग्निः । त्वा । तस्मात् । एनसः । सविता । च । प्र । मुञ्चताम् ॥ ६२ ॥

इयं नार्युप ब्रूते पूल्यान्यावपन्तिका ।
दीर्घायुरस्तु मे पतिर्जीवाति शरदः शतम् ॥ ६३ ॥

इयम् । नारी । उप । ब्रूते । पूल्यानि[1] । आऽवपन्तिका ।
दीर्घऽआयुः । अस्तु । मे । पतिः । जीवाति । शरदः । शतम् ॥ ६३ ॥

इहेमाविन्द्र सं नुद[2] चक्रवाकेव दंपती ।
प्रजयैनौ स्वस्तकौ विश्वमायुर्व्यश्नुताम्[3] ॥ ६४ ॥

इह । इमौ । इन्द्र । सम् । नुद । चक्रवाकाऽइव[4] । दंपती इति दम्ऽपती ।
प्रऽजया । एनौ । सुऽअस्तकौ । विश्वम् । आयुः । वि । अश्नुताम् ॥ ६४ ॥

यदासन्द्यामुपधाने यद् वोपवासने कृतम् ।
विवाहे कृत्यां यां चक्रुरास्नाने तां नि दध्मसि ॥ ६५ ॥

यत् । आऽसन्द्याम्[5] । उपऽधाने । यत् । वा । उपऽवासने । कृतम् ।
विऽवाहे । कृत्याम् । याम् । चक्रुः । आऽस्नाने[6] । ताम् । नि[7] । दध्मसि ॥ ६५ ॥

यद् दुष्कृतं[8] यच्छमलं विवाहे वहतौ च यत् ।
तत् संभलस्य कम्बले मृज्महे[9] दुरितं वयम् ॥ ६६ ॥

यत् । दुःऽकृतम् । यत् । शमलम् । विऽवाहे । वहतौ । च । यत् ।
तत् । सम्ऽभलस्य । कम्बले । मृज्महे । दुःऽइतम् । वयम् ॥ ६६ ॥

---

१ **A B $B^h$ D E $K^m$ R $S^m$ Dc Cs P $P^2$ J Cp** and the Vaidikas **K V** पूल्पा°. **C** alone has पूल्या°. The Prâkṛit form is पुल्ल पोल्ल, पोल, पोल्लय, (see Jacobi's *Ausgewahlte Erzahlungen* 36, 34) and not पुप्प or पुप्फ, and thus points to an original पूल्य and not पूल्प. The fact that the Vaidikas repeat पूल्प might only show that their reading was derived from the MSS. which they misread. २ **B E** सन्नु°. ३ **B R J** °श्नुतम्. ४ **P** चक्रवाकऽइव ।. ५ **P** °सद्याम् ।. ६ **P $P^2$ J** आस्ना°. We with **Cp**. ७ **P $P^2$** परि । for नि ।. We with **J Cp**. ८ **B D Cs** यद्दुःकृतं. **$S^m$** यद्दुःष्कृ°. ९ **B D E R $S^m$ Cs P $P^2$ J Cp** मृग्महे.

संभले मलं सादयित्वा कम्बले दुरितं वयम् ।
अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत् ॥ ६७ ॥

सम्ऽभले । मलम् । सादयित्वा । कम्बले । दुःऽइतम् । वयम् ।
अभूम । यज्ञियाः । शुद्धाः । प्र । नः । आयूंषि । तारिषत् ॥ ६७ ॥

कृत्रिमः कण्टकः शतदन् य एषः ।
अपास्याः केश्यं मलमप शीर्षण्यं लिखात् ॥ ६८ ॥

कृत्रिमः । कण्टकः । शतऽदन् । यः । एषः ।
अप । अस्याः । केश्यम् । मलम् । अप । शीर्षण्यम् । लिखात् ॥ ६८ ॥

अङ्गादङ्गाद् वयमस्या अप यक्ष्मं नि दध्मसि ।
तन्मा प्रापत् पृथिवीं मोत देवान् दिवं मा प्रापदुर्व१न्तरिक्षम् ।
अपो मा प्रापन्मलमेतदग्ने यमं मा प्रापत् पितृंश्च सर्वान् ॥ ६९ ॥

अङ्गात्ऽअङ्गात् । वयम् । अस्याः । अप । यक्ष्मम् । नि । दध्मसि ।
तत् । मा । प्र । आपत् । पृथिवीम् । मा । उत । देवान् । दिवम् । मा । प्र । आपत् । उरु । अन्तरिक्षम् ।
अपः । मा । प्र । आपत् । मलम् । एतत् । अग्ने । यमम् । मा । प्र । आपत् । पितॄन् । च । सर्वान् ॥ ६९ ॥

सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्यामि पयसौषधीनाम् ।
सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सनुहि वाजमेमम् ॥ ७० ॥ (१३)

सम् । त्वा । नह्यामि । पयसा । पृथिव्याः । सम् । त्वा । नह्यामि । पयसा । ओषधीनाम् ।
सम् । त्वा । नह्यामि । प्रऽजया । धनेन । सा । सम्ऽनद्धा । सनुहि । वाजम् । आ । इमम् ॥ ७० ॥ (१३)

अमोहमस्मि सा त्वं सामाहमस्म्यृक्त्वं द्यौरहं पृथिवी त्वम् ।

---

१ D S^m Cs P P^2 J Cp तार्षत्. २ So we with A B B^h C D E R Cs J. P P^0 कटंकः ।. S^m कंकतः changed to कंटकः. Cp कंटकः changed to कंकतः ( without accent ). Dc कंटकः changed to कंकतः. K K^m V कंकतः. ३ D K R S^m अपास्याः. ४ K K^m V P^2 लिखात्. Dc लिखात् changed to लिखात्. ५ A D E R S^m Cs ३ for १. ६ B^h K^m प्रापपितृंश्च. ७ P अस्याः ।. ८ P यक्ष्मन् ।. ९ P मा ।. १० P अपः ।. P^2 आपः ।. ११ A B^h वाजमेमां.

तावि॒ह सं भ॑वाव प्र॒जामा ज॑नयावहै ॥ ७१ ॥

अमः । अ॒हम् । अ॒स्मि । सा । त्वम् । साम॑ । अ॒हम् । अ॒स्मि । ऋक् । त्वम् । द्यौः । अ॒-
हम् । पृ॒थि॒वी । त्वम् ।

तौ । इ॒ह । सम् । भ॒वा॒व । प्र॒ऽजाम् । आ । ज॒न॒या॒व॒है॒ ॥ ७१ ॥

ज॒नि॒यन्ति ना॒वग्र॑वः पु॒त्रि॒यन्ति सु॒दान॑वः ।
अरि॑ष्टासू सचेवहि बृ॒ह॒ते वाज॑सातये ॥ ७२ ॥

ज॒नि॒ऽयन्ति॑ । नौ॒ । अग्र॑वः । पु॒त्रि॒ऽयन्ति॑ । सु॒ऽदान॑वः ।
अरि॑ष्टासू॒ इत्यरि॑ष्टऽअसू । स॒चे॒व॒हि॒ । बृ॒ह॒ते । वाज॑ऽसातये ॥ ७२ ॥

ये पि॒तरो॑ वधू॒द॒र्शा इ॒मं व॑ह॒तुमाग॑मन् ।
ते अ॒स्यै व॒ध्वै सं॑पत्न्यै प्र॒जाव॒च्छर्म॑ यच्छन्तु ॥ ७३ ॥

ये । पि॒तर॑ः । व॒धू॒ऽद॒र्शाः । इ॒मम् । व॒ह॒तुम् । आ । अग॑मन् ।
ते । अ॒स्यै । व॒ध्वै । सम्ऽप॑त्न्यै । प्र॒जाऽव॑त् । शर्म॑ । य॒च्छ॒न्तु॒ ॥ ७३ ॥

येदं पूर्वाग॑न् र॒श॒ना॒यमा॑ना प्र॒जाम॒स्यै द्रवि॑णं चे॒ह द॒त्त्वा ।
तां व॑ह॒न्त्वग॑तस्या॒नु पन्था॑ वि॒राडि॒यं सु॑प्र॒जा अत्य॑जैषीत् ॥ ७४ ॥

या । इ॒दम् । पूर्वा॑ । अग॑न् । र॒श॒ना॒ऽयमा॑ना । प्र॒ऽजाम् । अ॒स्यै । द्रवि॑णम् । च॒ । इ॒ह । द॒त्त्वा ।
ताम् । व॒ह॒न्तु॒ । अग॑तस्य । अनु॑ । पन्था॑म् । वि॒ऽराट् । इ॒यम् । सु॒ऽप्र॒जाः । अति॑ । अ॒-
जै॒षी॒त् ॥ ७४ ॥

प्र बु॑ध्यस्व सु॒बु॒धा बु॑ध्य॑माना दीर्घायु॒त्वाय॑ श॒तशा॑रदाय ।
गृ॒हान् गच्छ गृ॒हप॑त्नी य॒थासो॑ दी॒र्घं त॒ आयु॑ः सवि॒ता कृ॑णोतु ॥ ७५ ॥ (१८)

प्र । बु॒ध्य॒स्व॒ । सु॒ऽबु॒धा॑ । बुध्य॑माना । दी॒र्घा॒यु॒ऽत्वाय॑ । श॒तऽशा॑रदाय ।
गृ॒हान् । गच्छ॑ । गृ॒ह॒ऽप॑त्नी । यथा॑ । अस॑ः । दी॒र्घम् । ते॒ । आयु॑ः । स॒वि॒ता । कृ॒णो॒तु॒ ॥ ७५ ॥ (१४)

द्वितीयेऽनुवाके प्रथमं सूक्तम् ॥

द्वितीयोऽनुवाकः ॥

इति चतुर्दशं काण्डं समाप्तम् ॥

---

१ A B[h] D E K K[m] S[m] V Cs °गमं. Dc P P[2] J. °गमम्।. Cp आ। अगमं।. We with C R.
२ A B B[h] संपत्नै. ३ C K S[m] V °गन्नश°. K[m] Dc °गैन°. P अगन्।. ४ C बध्यमाना.

अत्र काण्डे व्रात्यमहिमा प्रपञ्च्यते। व्रात्यो नाम उपनयनादिसंस्कारहीनः पुरुषः। सोऽर्थाद् यज्ञादिवेदविहिताः क्रियाः कर्तुं नाधिकारी। न स व्यवहारयोग्यश्चेत्यादि जनमतं मनसिकृत्य व्रात्योधिकारी व्रात्यो महानुभावो व्रात्यो देवप्रियो व्रात्यो ब्राह्मणक्षत्रिययोर्वर्चसो मूल किंबहुना व्रात्यो देवाधिदेव एवेति प्रतिपाद्यते। यत्र व्रात्यो गच्छति विश्वं जगद् विश्वे च देवास्तत्र तमनुगच्छन्ति तस्मिन् स्थिते तिष्ठन्ति तस्मिंश्चलति ते चलन्ति। यदा स गच्छति राजवत् स गच्छतीत्यादि। न पुनरेतत् सर्वव्रात्यपरं प्रतिपादनम् अपि तु कंचिद्विद्वत्तम महाधिकारं पुण्यशीलं विश्वसमान्य कर्मपरैर्ब्राह्मणैर्विद्विष्ट व्रात्यम् अनुलक्ष्य वचनम् इति मन्तव्यम्॥

**व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत्॥ १॥**

व्रात्यः। आसीत्। ईयमानः। एव। सः। प्रजाऽपतिम्। सम्। ऐरयत्॥ १॥

**स प्रजापतिः सुवर्णमात्मन्नपश्यत् तत् प्राजनयत्॥ २॥**

सः। प्रजाऽपतिः। सुऽवर्णम्। आत्मन्। अपश्यत्। तत्। प्र। अजनयत्॥ २॥

**तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद् ब्रह्माभवत् तत् तपोभवत् तत् सत्यमभवत् तेन प्राजायत॥ ३॥**

तत्। एकम्। अभवत्। तत्। ललामम्। अभवत्। तत्। महत्। अभवत्। तत्। ज्येष्ठम्। अभवत्। तत्। ब्रह्म। अभवत्। तत्। तपः। अभवत्। तत्। सत्यम्। अभवत्। तेन। प्र। अजायत॥ ३॥

**सोवर्धत स महानभवत् स महादेवोभवत्॥ ४॥**

सः। अवर्धत। सः। महान्। अभवत्। सः। महाऽदेवः। अभवत्॥ ४॥

**स देवानामीशां पर्यैत् स ईशानोभवत्॥ ५॥**

सः। देवानाम्। ईशाम्। परि। ऐत्। सः। ईशानः। अभवत्॥ ५॥

**स एकव्रात्योभवत् स धनुरादत्त तदेवेन्द्रधनुः॥ ६॥**

सः। एकऽव्रात्यः। अभवत्। सः। धनुः। आ। अदत्त। तत्। एव। इन्द्रऽधनुः॥ ६॥

**नीलमस्योदरं लोहितं पृष्ठम्॥ ७॥**

नीलम्। अस्य। उदरम्। लोहितम्। पृष्ठम्॥ ७॥

**नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति॥ ८॥**

नीलेन । एव । अप्रियम् । भ्रातृव्यम् । प्र । ऊर्णोति । लोहितेन । द्विषन्तम् । विध्यति । इति । ब्रह्मऽवादिनः । वदन्ति ॥ ८ ॥

इति प्रथमेनुवाके प्रथमं पर्यायसूक्तम् ॥

स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् ॥ १ ॥

सः । उत् । अतिष्ठत् । सः । प्राचीम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥

तं बृहच्च रथंतरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥ २ ॥

तम् । बृहत् । च । रथम्ऽतरम् । च । आदित्याः । च । विश्वे । च । देवाः । अनुऽव्यचलन् ॥ २ ॥

बृहते च वै स रथंतराय चादित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ ३ ॥

बृहते । च । वै । सः । रथम्ऽतराय । च । आदित्येभ्यः । च । विश्वेभ्यः । च । देवेभ्यः । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ ३ ॥

बृहतश्च वै स रथंतरस्य चादित्यानां च विश्वेषां च देवानां प्रियं धाम भवति तस्य प्राच्यां दिशि ॥ ४ ॥

बृहतः । च । वै । सः । रथम्ऽतरस्य । च । आदित्यानाम् । च । विश्वेषाम् । च । देवानाम् । प्रियम् । धाम । भवति । तस्य । प्राच्याम् । दिशि ॥ ४ ॥

श्रद्धा पुंश्चली मित्रो[1] मागधो विज्ञानं वासोहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ ५ ॥

श्रद्धा । पुंश्चली । मित्रः । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ ५ ॥

भूतं च भविष्यच्च परिष्कन्दौ[2] मनो विपथम्[3] ॥ ६ ॥

भूतम् । च । भविष्यत् । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ ६ ॥

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः[4] ॥ ७ ॥

मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः ॥ ७ ॥

---

१ $B^h$ C E $C_s$ Cr मित्रो मागधो. R मित्रो मागधो. We with A B D K $K^m$ $S^m$ V Dc P $P^J$ J.
२ D E K $S^m$ V Dc $C_s$ परिस्कन्दौ. We with A B $B^h$ C $K^m$ R. ३ So we with all our authorities. See Rw. ४ So we with all our authorities. See Rw.

कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ ८ ॥

कीर्तिः । च । यशः । च । पुरःऽसरौ । आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । एवम् । वेद ॥ ८ ॥

स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ॥ ९ ॥

°सः । दक्षिणाम् । दिशम् ।० ॥ ९ ॥

तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचिलन् ॥ १० ॥

तम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । यज्ञः । च । यजमानः । च । पशवः । च । अनुऽव्यचिलन् ॥ १० ॥

यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ ११ ॥

यज्ञायज्ञियाय । च । वै । सः । वामऽदेव्याय । च । यज्ञाय । च । यजमानाय । च । पशुऽभ्यः । च । आ । वृश्चते ।० ॥ ११ ॥

यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति[२] तस्य दक्षिणायां दिशि ॥ १२ ॥

यज्ञायज्ञियस्य । च । वै । सः । वामऽदेव्यस्य । च । यज्ञस्य । च । यजमानस्य । च । पशूनाम्[३] । च । प्रियम् । धाम । भवति । तस्य । दक्षिणायाम् । दिशि ॥ १२ ॥

उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १३ ॥

उषाः । पुंश्चली । मन्त्रः । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १३ ॥

अमावास्या[१] च पौर्णमासी च परिष्कन्दौ मनो ०।० ॥ १४ ॥

अमाऽवास्या[१] । च । पौर्णऽमासी । च ।० ॥ १४ ॥

---

१ So we with all our authorities. See Rw. २ All our authorities omit य एवं वेद which Rw. insert after भवति. ३ P J पशूनाम् I. We with P[३] Cp.

स उदतिष्ठत् स प्रतीचीं दिशमनु व्यचलत् ॥ १५ ॥

°सः । प्रतीचीम् । दिशम् ।० ॥ १५ ॥

तं वैरूपं च वैराजं चापश्च वरुणश्च राजानुव्यचलन् ॥ १६ ॥

तम् । वैरूपम् । च । वैराजम् । च । आपः । च । वरुणः । च । राजा । अनुऽव्यचलन् ॥ १६ ॥

वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ १७ ॥

वैरूपाय । च । वै । सः । वैराजाय । च । अत्ऽभ्यः । च । वरुणाय । च । राज्ञे । आ । वृश्चते ।० ॥ १७ ॥

वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः प्रियं धाम भवति तस्य प्रतीच्यां दिशि ॥ १८ ॥

वैरूपस्य । च । वै । सः । वैराजस्य । च । अपाम् । च । वरुणस्य । च । राज्ञः । प्रियम् । धाम । भवति । तस्य । प्रतीच्याम् । दिशि ॥ १८ ॥

इरा[१] पुंश्चली हसो[२] मागधो विज्ञानं वासोहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १९ ॥

इरा[१] । पुंश्चली । हसः[२] । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १८ ॥

अहश्च रात्री च परिष्कन्दौ[३] मनो०।० ॥ २० ॥

अहः । च । रात्री । च ।० ॥ २० ॥

स उदतिष्ठत् स उदीचीं दिशमनु व्यचलत् ॥ २१ ॥

सः । उत् । अतिष्ठत् । सः । उदीचीम् । दिशम् । अनु । वि । अचलत् ॥ २१ ॥

तं श्यैतं च नौधसं च सप्तर्षयश्च[४] सोमश्च राजानुव्यचलन् ॥ २२ ॥

---

१ So we divide with all our authorities. See Rw. We read इरा पुं° with A B B̊[h] C D E R S̊[m] Cs P J Cp. Dc इरा पुं° changed to इरा पुं°. K K̊[m] P̊[2] V इरा पुं°. The latter MSS are influenced by the *Rgveda* accent. २ A D K K̊[m] V P̊[2] हसो मागधो. Dc हसो मागधो changed to हसो मागधो. We with B̊[h] C E R S̊[m] Cs P J Cp. ३ See note 2 at page 320. ४ A B B̊[h] C K K̊[m] R सप्तऋष°. We with D E S̊[m] V Dc Cs.

तम् । श्यैतम् । च । नौधसम् । च । सप्तऽऋषयः । च । सोमः । च । राजा । अनुऽव्यचिलन् ॥ २२ ॥

**श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ २३ ॥**

श्यैताय । च । वै । सः । नौधसाय । च । सप्तर्षिऽभ्यः । च । सोमाय । च । राज्ञे । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ २३ ॥

**श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां[1] च सोमस्य च राज्ञः प्रियं धाम भवति तस्योदीच्यां दिशि ॥ २४ ॥**

श्यैतस्य । च । वै । सः । नौधसस्य । च । सप्तऽऋषीणाम्[1] । च । सोमस्य । च । राज्ञः । प्रियम् । धाम । भवति । तस्य । उदीच्याम् । दिशि ॥ २४ ॥

**विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ २५ ॥**

विऽद्युत् । पुंश्चली । स्तनयित्नुः । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः[2] । मणिः ॥ २५ ॥

**श्रुतं च विश्रुतं च परिष्कन्दौ[3] मनो विपथम् ॥ २६ ॥**

श्रुतम् । च । विऽश्रुतम्[4] । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ २६ ॥

**मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥ २७ ॥**

मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः ॥ २७ ॥

**कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ २८ ॥**

कीर्तिः । च । यशः । च । पुरःऽसरौ । आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । ० ॥ २८ ॥

इति प्रथमेऽनुवाके द्वितीयं पर्यायसूक्तम् ॥

**स संवत्सरमूर्ध्वो[5]ऽतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति ॥ १ ॥**

---

१ C P P² J Cp सप्तऋषी°. We with A B B^h D E K K^m R S^m V Dc Cs. २ P °ली: ।. ३ A D E K V Dc Cs परिस्कन्दौ. ४ P P² have no *avagraha*. J वि°श्रुतम् । changed to विश्रुतम् ।. We with Cp. ५ B B^h C E R °ध्वोति°. Cs °मूर्द्धोति°. We with A D K K^m S^m V Dc.

सः । सम्ऽवत्सरम् । ऊर्ध्वः । अतिष्ठत् । तम् । देवाः । अब्रुवन् । व्रात्य । किम् । नु । तिष्ठसि । इति ॥ १ ॥

सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥ २ ॥

सः । अब्रवीत् । आऽसन्दीम् । मे । सम् । भरन्तु । इति ॥ २ ॥

तस्मै व्रात्यायासन्दीं समभरन् ॥ ३ ॥

तस्मै । व्रात्याय । आऽसन्दीम् । सम् । अभरन् ॥ ३ ॥

तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ॥ ४ ॥

तस्याः । ग्रीष्मः । च । वसन्तः । च । द्वौ । पादौ । आस्ताम् । शरत् । च । वर्षाः । च । द्वौ ॥ ४ ॥

बृहच्च रथंतरं चानूच्ये३ आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये[1] ॥ ५ ॥

बृहत् । च । रथम्ऽतरम् । च । अनूच्ये३ इति । आस्ताम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । तिरश्च्ये३ इति ॥ ५ ॥

ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥ ६ ॥

ऋचः । प्राञ्चः । तन्तवः । यजूंषि । तिर्यञ्चः ॥ ६ ॥

वेद आस्तरणं ब्रह्मोपबर्हणम् ॥ ७ ॥

वेदः । आऽस्तरणम् । ब्रह्म । उपऽबर्हणम् ॥ ७ ॥

सामासाद उद्गीथोऽपश्रयः ॥ ८ ॥

साम[2] । आऽसादः । उत्ऽगीथः । अपऽश्रयः ॥ ८ ॥

तामासन्दीं व्रात्य आरोहत् ॥ ९ ॥

ताम् । आऽसन्दीम् । व्रात्यः । आ । अरोहत् ॥ ९ ॥

तस्य देवजनाः परिष्कन्दा[3] आसन्त्संकल्पाः प्रहाय्या३[4] विश्वानि भूतान्युपसदः ॥ १० ॥

तस्य । देवऽजनाः । परिऽस्कन्दाः । आसन् । सम्ऽकल्पाः । प्रऽहाय्याः३ । विश्वानि । भूतानि । उपऽसदः ॥ १० ॥

---

१ D तिरश्च्यै. A B[h] E R Cs P P[2] J Cp तिरश्चे. We with C K K[m] S[m] V Dc. २ P सामा ।. ३ A D E K S[m] V Dc Cs परिस्कन्दा. B[h] C K[m] R परिष्कन्दा. ४ A B E K P प्रहाय्यॊ°. We with B[h] C D K[m] R S[m] V Dc Cs P[2] J Cp.

**विश्वान्येवास्य भूतान्युपसदो भवन्ति[1] य एवं वेद ॥ ११ ॥**

विश्वानि । एव । अस्य । भूतानि । उपऽसदः । भवन्ति । यः ।० ॥ ११ ॥

इति प्रथमेनुवाके तृतीयं पर्यायसूक्तम् ॥

**तस्मै प्राच्या दिशः ॥ १ ॥**

तस्मै । प्राच्याः । दिशः[2] ॥ १ ॥

**वासन्तौ मासौ गोप्तारावकुर्वन्[3] बृहच्च रथंतरं चानुष्ठातारौ ॥ २ ॥**

वासन्तौ । मासौ । गोप्तारौ । अकुर्वन्[3] । बृहत् । च । रथम्ऽतरम् । च । अनुऽस्थातारौ ॥ २ ॥

**वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथंतरं चानु तिष्ठतो य एवं वेद ॥ ३ ॥**

वासन्तौ । एनम् । मासौ । प्राच्याः । दिशः[2] । गोपायतः । बृहत् । च । रथम्ऽतरम् । च । अनु । तिष्ठतः । यः ।० ॥ ३ ॥

**तस्मै दक्षिणाया दिशः ॥ ४ ॥**

तस्मै । दक्षिणायाः । दिशः[2] ॥ ४ ॥

**ग्रैष्मौ मासौ गोप्तारावकुर्वन्[3] यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥ ५ ॥**

ग्रैष्मौ । मासौ । गोप्तारौ । अकुर्वन्[3] । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च ।० ॥ ५ ॥

**ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो य एवं वेद ॥ ६ ॥**

ग्रैष्मौ । एनम् । मासौ । दक्षिणायाः । दिशः । गोपायतः । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च ।० ॥ ६ ॥

**तस्मै प्रतीच्या दिशः ॥ ७ ॥**

तस्मै । प्रतीच्याः । दिशः ॥ ७ ॥

**वार्षिकौ मासौ गोप्तारावकुर्वन्[3] वैरूपं च वैराजं चानुष्ठातारौ ॥ ८ ॥**

वार्षिकौ । मासौ । गोप्तारौ । अकुर्वन्[3] । वैरूपम् । च । वैराजम् । च ।० ॥ ८ ॥

---

१ A B Cs P P[2] J भवति. २ P दिशिः I. ३ All our MSS. read °रावकु° which is not quite inadmissible. The first sentence may end with गोप्तारौ, and अकुर्वन् may begin a new one. See Rw.

वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो य एवं वेद ॥ ९ ॥

वार्षिकौ । एनम् । मासौ । प्रतीच्याः । दिशः । गोपायतः । वैरूपम् । च । वैराजम् । च ।० ॥ ९ ॥

तस्मा उदीच्या दिशः ॥ १० ॥

तस्मै । उदीच्याः । दिशः ॥ १० ॥

शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ॥ ११ ॥

शारदौ । मासौ । गोप्तारौ । अकुर्वन्[1] । श्यैतम् । च । नौधसम् । च ।० ॥ ११ ॥

शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च नौधसं चानु तिष्ठतो य एवं वेद ॥ १२ ॥

शारदौ । एनम् । मासौ । उदीच्याः । दिशः । गोपायतः । श्यैतम् । च । नौधसम् । च ।० ॥ १२ ॥

तस्मै ध्रुवाया दिशः ॥ १३ ॥

तस्मै । ध्रुवायाः । दिशः ॥ १३ ॥

हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ ॥ १४ ॥

हैमनौ । मासौ । गोप्तारौ । अकुर्वन्[1] । भूमिम् । च । अग्निम् । च ।० ॥ १४ ॥

हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद ॥ १५ ॥

हैमनौ । एनम् । मासौ । ध्रुवायाः । दिशः । गोपायतः । भूमिः । च । अग्निः । च ।० ॥ १५ ॥

तस्मा ऊर्ध्वाया दिशः ॥ १६ ॥

तस्मै । ऊर्ध्वायाः । दिशः ॥ १६ ॥

शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ॥ १७ ॥

शैशिरौ । मासौ । गोप्तारौ । अकुर्वन्[1] । दिवम् । च । आदित्यम् । च । अनुऽस्थातारौ ॥ १७ ॥

शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद ॥ १८ ॥

१ See note 3 at page 325.

शैशिरौ । एनम् । मासौ । ऊर्ध्वायाः । दिशः । गोपायतः । द्यौः । च । आदित्यः । च । अनु । तिष्ठतः । यः ।० ॥ १८ ॥

इति प्रथमेनुवाके चतुर्थं पर्यायसूक्तम् ॥

तस्मै प्राच्या दिशो अन्तर्देशाद् भवमिष्वासमनुष्ठातारमकुर्वन् ॥ १ ॥

तस्मै । प्राच्याः । दिशः[1] । अन्तःऽदेशात् । भवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥ १ ॥

भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति नैनं शर्वो न भवो नेशानः[2] ॥ २ ॥

भवः । एनम् । इषुऽआसः । प्राच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः ॥ २ ॥

नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥ ३ ॥

न । अस्य । पशून् । न । समानान् । हिनस्ति । यः ।० ॥ ३ ॥

तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥ ४ ॥

तस्मै । दक्षिणायाः । दिशः । अन्तःऽदेशात् । शर्वम् । इषुऽआसम् ।० ॥ ४ ॥

शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति नैनं० ॥ ५ ॥

शर्वः । एनम् । इषुऽआसः । दक्षिणायाः । दिशः ।० ॥ ५ ॥

तस्मै प्रतीच्या दिशो अन्तर्देशात् पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥ ६ ॥

तस्मै । प्रतीच्याः । दिशः । अन्तःऽदेशात् । पशुऽपतिम्[3] । इषुऽआसम् ।० ॥ ६ ॥

पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनु० ॥ ७ ॥

पशुऽपतिः[4] । एनम् । इषुऽआसः । प्रतीच्याः । दिशः ।० ॥ ७ ॥

तस्मा उदीच्या दिशो अन्तर्देशादुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥ ८ ॥

तस्मै । उदीच्याः । दिशः । अन्तःऽदेशात् । उग्रम् । देवम् । इषुऽआसम् ।० ॥ ८ ॥

उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनु० ॥ ९ ॥

---

१ P दिशिः ।. २ So we with all our authorities. See Rw ३ P पशू° ।. ४ P पशू° ।.

उग्रः । एनम् । देवः । इषुऽआसः । उदीच्याः । दिशः ।० ॥ ९ ॥

तस्मै ध्रुवाया दिशो अन्तर्देशाद् रुद्रमिष्वासमनुष्ठातारमकुर्वन् ॥ १० ॥

तस्मै । ध्रुवायाः । दिशः । अन्तःऽदेशात् । रुद्रम् । इषुऽआसम् ।० ॥ १० ॥

रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनु० ॥ ११ ॥

रुद्रः । एनम् । इषुऽआसः । ध्रुवायाः । दिशः ।० ॥ ११ ॥

तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥१२॥

तस्मै । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । महाऽदेवम् । इषुऽआसम् ।० ॥ १२ ॥

महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनु० ॥ १३ ॥

महाऽदेवः । एनम् । इषुऽआसः । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता ।० ॥१३॥

तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥ १४ ॥

तस्मै । सर्वेभ्यः । अन्तःऽदेशेभ्यः । ईशानम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥ १४ ॥

ईशान एनमिष्वासः सर्वेभ्यो अन्तर्देशेभ्योनुष्ठातानु तिष्ठति नैनं शर्वो न भवो नेशानः ॥ १५ ॥

ईशानः । एनम् । इषुऽआसः । सर्वेभ्यः । अन्तःऽदेशेभ्यः । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः ॥ १५ ॥

नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥ १६ ॥

न । अस्य । पशून् । न । समानान्[3] । हिनस्ति । यः ।० ॥ १६ ॥

इति प्रथमेनुवाके पञ्चमं पर्यायसूक्तम् ॥

स ध्रुवां दिशमनु व्यचलत् ॥ १ ॥

सः । ध्रुवाम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥

तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचिलन् ॥ २ ॥

तम् । भूमिः । च । अग्निः । च । ओषधयः । च । वनस्पतयः । च । वानस्पत्याः । च । वीरुधः । च । अनुऽव्यचिलन् ॥ २ ॥

---

१ P मा° ।. २ A B[h] omit अ°. ३ P समानाम् ।.

भूमेश्च वै सो३ऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां च वी-
रुधां च प्रियं धाम भवति य एवं वेद ॥ ३ ॥

भूमेः । च । वै । सः । अग्नेः । च । ओषधीनाम् । च । वनस्पतीनाम् । च । वानस्पत्या-
नाम् । च । वीरुधाम् । च । प्रियम् । धाम । भवति । यः ।० ॥ ३ ॥

स ऊर्ध्वां दिशमनु व्यचलत् ॥ ४ ॥

सः । ऊर्ध्वाम् । दिशम् ।० ॥ ४ ॥

तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ॥ ५ ॥

तम् । ऋतम् । च । सत्यम् । च । सूर्यः । च । चन्द्रः । च । नक्षत्राणि । च ।० ॥ ५ ॥

ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च प्रियं
धाम भवति य एवं वेद ॥ ६ ॥

ऋतस्य । च । वै । सः । सत्यस्य । च । सूर्यस्य । च । चन्द्रस्य । च । नक्षत्राणाम् ।
च ।० ॥ ६ ॥

स उत्तमां दिशमनु व्यचलत् ॥ ७ ॥

सः । उत्ऽतमाम् । दिशम् ।० ॥ ७ ॥

तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥ ८ ॥

तम् । ऋचः । च । सामानि । च । यजूंषि । च । ब्रह्म । च ।० ॥ ८ ॥

ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं
वेद ॥ ९ ॥

ऋचाम् । च । वै । सः । साम्नाम् । च । यजुषाम् । च । ब्रह्मणः । च ।० ॥ ९ ॥

स बृहतीं दिशमनुव्यचलत् ॥ १० ॥

सः । बृहतीम् । दिशम् ।० ॥ १० ॥

तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ॥ ११ ॥

---

१ K V Dc १ for ३. A D E K̆ R Š Cs no sign of kampa, but read सोग्नेश्चौ°. We with B B̆ C. २ So we with all our authorities. Rw who omit च in their Edition restore it in their *Index*.

तम् । इतिहऽआसः । च । पुराणम् । च । गार्थाः । च । नाराशंसीः । च ।० ॥ ११ ॥

**इतिहासस्य च वै स पुराणस्य च गार्थानां च नाराशंसीनां च प्रियं धार्म भवति य एवं वेद ॥ १२ ॥**

इतिहऽआसस्य । च । वै । सः । पुराणस्य । च । गार्थानाम् । च । नाराशंसीनाम् । च ।० ॥ १२ ॥

**स पंरमां दिशमनु व्यचलत् ॥ १३ ॥**

सः । परमाम् । दिर्शम् ।० ॥ १३ ॥

**तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानु- व्यचलन् ॥ १४ ॥**

तम् । आऽहवनीयः । च । गार्हऽपत्यः । च । दक्षिणऽअग्निः । च । यज्ञः । च । यजमानः । च । पशवः । च ।० ॥ १४ ॥

**आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च यजमा- नस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥ १५ ॥**

आऽहवनीयस्य । च । वै । सः । गार्हऽपत्यस्य । च । दक्षिणऽअग्नेः । च । यज्ञस्य । च । यजमानस्य । च । पशूनाम्[1] । च ।० ॥ १५ ॥

**सोनादिष्टां दिशमनु व्यचलत् ॥ १६ ॥**

सः । अनादिष्टाम् । दिर्शम् ।० ॥ १६ ॥

**तमृतवश्चार्तवाश्च लोकाश्च लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चा- नुव्यचलन् ॥ १७ ॥**

तम् । ऋतवः । च । आर्तवाः । च । लोकाः । च । लौक्याः । च । मासाः । च । अर्धऽमासाः । च । अहोरात्रे इति । च ।० ॥ १७ ॥

---

१ P J पशूनाम् ।. २ A B B[h] C D E K[m] R S[m] C[s] P J C[p] °श्च लोकाश्च. Dc changes च लोकाश्च to चं लोकाश्चं. P[2] लोकां ।. K and V alone recite चं लोकाश्चं, but theirs is surely not the original Atharvan reading but a recent correction. The MSS. of Rw too have च लोकाश्च (*vide* their *Index.*) The accent, therefore, though irregular is certainly the genuine Atharvan accent.

ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां चार्धमासानां चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद ॥ १८ ॥

ऋतूनाम् । च । वै । सः । आर्तवानाम् । च । लोकानाम्[1] । च । लौक्यानाम् । च । मासानाम् । च । अर्धऽमासानाम् । च । अहोरात्रयोः । च ।० ॥ १८ ॥

सोनावृत्तां दिशमनु व्यचलत् ततो नावर्त्स्यन्नमन्यत[2] ॥ १९ ॥

सः । अनाऽवृत्ताम् । दिशम् । अनु । वि । अचलत् । ततः । न । आऽवर्त्स्यन् । अमन्यत[3] ॥ १९ ॥

तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥ २० ॥

तम् । दितिः । च । अदितिः । च । इडा । च । इन्द्राणी । च । अनुऽव्यचलन् ॥ २० ॥

दितेश्च वै सोदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद ॥ २१ ॥

दितेः । च । वै । सः । अदितेः । च । इडायाः । च । इन्द्राण्याः । च । प्रियम् ।० ॥ २१ ॥

स दिशोनु व्यचलत् तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च देवताः ॥ २२ ॥

सः । दिशः । अनु । वि । अचलत् । तम् । विऽराट् । अनु । वि । अचलत् । सर्वे । च । देवाः । सर्वाः । च । देवताः ॥ २२ ॥

विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद ॥ २३ ॥

विऽराजः । च । वै । सः । सर्वेषाम् । च । देवानाम् । सर्वासाम् । च । देवतानाम् । प्रियम् ।० ॥ २३ ॥

स सर्वानन्तर्देशाननु व्यचलत् ॥ २४ ॥

सः । सर्वान् । अन्तःऽदेशान् । अनु । वि । अचलत् ॥ २४ ॥

तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ॥ २५ ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । अनुऽव्यचिलन् ॥ २५ ॥

---

१ Here too A B B̄ C D E R S̄ Cs P P̄ J Cp have च लोकानां. Dc लोकानां as an after correction K K̄ V alone have लोकानां, but theirs is not the old true Atharvan tradition. २ S̄ °मन्यत. ३ P अमन्यत् ।.

प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद ॥ २६ ॥

प्रजाऽपतेः । च । वै । सः । परमेऽस्थिनः । च । पितुः । च । पितामहस्य । च । प्रियम् । धाम । भवति । यः ।० ॥ २६ ॥

इति प्रथमेनुवाके षष्ठं पर्यायसूक्तम् ॥

स महिमा सद्रुर्भूत्वान्तं पृथिव्या अगच्छत् स समुद्रोऽभवत् ॥ १ ॥

सः । महिमा । सद्रुः । भूत्वा । अन्तम् । पृथिव्याः । अगच्छत् । सः । समुद्रः । अभवत् ॥ १ ॥

तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च वर्षं भूत्वानुव्यवर्तयन्त ॥ २ ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । आपः । च । श्रद्धा । च । वर्षम् । भूत्वा । अनुऽव्यवर्तयन्त ॥ २ ॥

ऐनमापो गच्छन्त्यैनं[1] श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ॥ ३ ॥

आ । एनम् । आपः । गच्छन्ति । आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । वर्षम् । गच्छति । यः ।० ॥ ३ ॥

तं श्रद्धा च यज्ञश्च लोकश्चान्नं[3] चान्नाद्यं च भूत्वाभिपर्यावर्तन्त ॥ ४ ॥

तम् । श्रद्धा । च । यज्ञः । च । लोकः[3] । च । अन्नम् । च । अन्नऽअद्यम् । च । भूत्वा । अभिऽपर्यावर्तन्त ॥ ४ ॥

ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ॥ ५ ॥

आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । यज्ञः । गच्छति । आ । एनम् । लोकः । गच्छति । आ । एनम् । अन्नम् । गच्छति । आ । एनम् । अन्नऽअद्यम् । गच्छति । यः ।० ॥ ५ ॥

प्रथमेनुवाके सप्तमं पर्यायसूक्तम् ॥

इति प्रथमोनुवाकः ॥

---

१ So we with all our authorities. Rw omit सः. २ So we with all our authorities. Rw change to गच्छन्ति. ३ S$^m$ P लोकाश्चा°. ४ E भूत्वाभिप°. ५ S$^m$ गच्छत्यैनं. ६ P लोकाः ।.

सोऽरज्यत ततो राजन्योऽजायत ॥ १ ॥

सः । अरज्यत । ततः । राजन्यः । अजायत ॥ १ ॥

स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् ॥ २ ॥

सः । विशः । सऽबन्धून् । अन्नम् । अन्नऽअद्यम् । अभिऽउदतिष्ठत् ॥ २ ॥

विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ॥ ३ ॥

विशाम् । च । वै । सः । सऽबन्धूनाम् । च । अन्नस्य । च । अन्नऽअद्यस्य । च । प्रियम् । धाम । भवति । यः ।० ॥ ३ ॥

इति द्वितीयेऽनुवाके प्रथमं पर्यायसूक्तम् ॥

स विशोऽनु व्यचलत् ॥ १ ॥

सः । विशः । अनु । वि । अचलत् ॥ १ ॥

तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् ॥ २ ॥

तम् । सभा । च । सम्ऽइतिः । च । सेना । च । सुरा । च । अनुऽव्यचलन् ॥ २ ॥

सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ॥ ३ ॥

सभायाः । च । वै । सः । सम्ऽइतेः । च । सेनायाः । च । सुरायाः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥

इति द्वितीयेऽनुवाके द्वितीयं पर्यायसूक्तम् ॥

तद् यस्यैवं विद्वान् व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् ॥ १ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । राज्ञः । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

श्रेयांसमेनमात्मनो मानयेत् तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ॥ २ ॥

---

१ B B[h] C E R P P[2] J सबन्धूनन्नाद्य॰. Cs सबंधूनन्नमन्नाद्यं. Cp अन्नं । अन्नऽअद्यं । changed to अन्नऽअद्यं ।, omitting अन्नं ।. We with A D K K[m] S[m] V Dc. २ P ॰चलत् ।. ३ All our MSS. and Vaidikas have ॰येतथा except Cp which has मानयेत् । तथा । changed from मानये । तथा ।.

श्रेयांसम् । एनम् । आत्मनः । मानयेत् । तथा । क्षत्राय । न । आ । वृश्चते । तथा । राष्ट्राय । न । आ । वृश्चते ॥ २ ॥

**अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ॥ ३ ॥**

अतः । वै । ब्रह्म । च । क्षत्रम् । च । उत् । अतिष्ठताम् । ते इति । अब्रूताम् । कम् । प्र । विशाव । इति ॥ ३ ॥

**अतो वै बृहस्पतिमेव ब्रह्म प्र विशत्विन्द्रं क्षत्रं तथा वा इति ॥ ४ ॥**

०। बृहस्पतिम् । एव । ब्रह्म । प्र । विशतु । इन्द्रम् । क्षत्रम् । तथा । वै । इति ॥ ४ ॥

**अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ॥ ५ ॥**

अतः । वै । बृहस्पतिम् । एव । ब्रह्म । प्र । अविशत् । इन्द्रम् । क्षत्रम् ॥ ५ ॥

**इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ॥ ६ ॥**

इयम् । वै । ऊं इति । पृथिवी । बृहस्पतिः । द्यौः । एव । इन्द्रः ॥ ६ ॥

**अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ॥ ७ ॥**

अयम् । वै । ऊं इति । अग्निः । ब्रह्म । असौ । आदित्यः । क्षत्रम् ॥ ७ ॥

**ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ॥ ८ ॥**

आ । एनम् । ब्रह्म । गच्छति । ब्रह्मऽवर्चसी । भवति ॥ ८ ॥

**यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ॥ ९ ॥**

यः । पृथिवीम् । बृहस्पतिम् । अग्निम् । ब्रह्म । वेद ॥ ९ ॥

**ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति ॥ १० ॥**

आ । एनम् । इन्द्रियम् । गच्छति । इन्द्रियऽवान् । भवति ॥ १० ॥

**य आदित्यं क्षत्रं दिवमिन्द्रं वेद ॥ ११ ॥**

यः । आदित्यम् । क्षत्रम् । दिवम् । इन्द्रम् । वेद ॥ ११ ॥

इति द्वितीयेनुवाके तृतीयं पर्यायसूक्तम् ॥

---

१ P आत्मानः ।. २ See note 3, page 333. ३ So we with A B B̈ D K K̈ S̈ V C, Cp. Rw omit अतो वै. C E R omit the words. Dc omits them at first but subsequently restores them. ४ B B̈ C, ब्रह्म प्राविं° ( in all corrected from ब्रह्मं प्रावि° ). C R S̈ ब्रह्मं प्रावि°. Dc ब्रह्मं प्राविश॒° changed to ब्रह्मं प्राविश॰. We with A D E K K̈ V P ब्रह्मं । प्र॰विंश° ।. P̊ ब्रह्मं । प्र॰विशतुं ।. J प्र॰विंशतु । changed to प्र॰विश॒तु॒ ।. Cp बह्मं । प्र॰विश॒तु॒ ।. ५ B E ऊं. ६ A B °ब्रंह्मा°.

तद् यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् ॥ १ ॥

°व्रात्यः। अतिथिः ।० ॥ १ ॥

स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वावात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं तथास्तु व्रात्य यथा ते वशस्तथास्तु व्रात्य यथा ते निकामस्तथास्त्विति ॥ २ ॥

स्वयम्। एनम्। अभिऽउदेत्य। ब्रूयात्। व्रात्य। क्व। अवात्सीः। व्रात्य। उदकम्। व्रात्य। तर्पयन्तु। व्रात्य। यथा। ते। प्रियम्। तथा। अस्तु। व्रात्य। यथा। ते। वशः। तथा। अस्तु। व्रात्य। यथा। ते। निऽकामः। तथा। अस्तु। इति ॥ २ ॥

यदेनमाह व्रात्य क्वावात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ॥ ३ ॥

यत्। एनम्। आह। व्रात्य। क्व। अवात्सीः। इति। पथः। एव। तेन। देवऽयानान्[1]। अव। रुन्द्धे ॥ ३ ॥

यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्द्धे ॥ ४ ॥

०। व्रात्य। उदकम्। इति। अपः। एव। तेन। अव। रुन्द्धे ॥ ४ ॥

यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ॥ ५ ॥

०। व्रात्य। तर्पयन्तु। इति। प्राणम्। एव। तेन। वर्षीयांसम्। कुरुते ॥ ५ ॥

यदेनमाह व्रात्य यथा ते प्रियं तथास्त्विति प्रियमेव तेनाव रुन्द्धे ॥ ६ ॥

यत्। एनम्। आह[2]। व्रात्य। यथा। ते। प्रियम्। तथा। अस्तु। इति। प्रियम्। एव। तेन। अव। रुन्द्धे ॥ ६ ॥

ऐनं प्रियं गच्छति प्रियः प्रियस्य भवति य एवं वेद ॥ ७ ॥

आ। एनम्। प्रियम्। गच्छति। प्रियः। प्रियस्य। भवति। यः। एवम्। वेद ॥ ७ ॥

यदेनमाह व्रात्य यथा ते वशस्तथास्त्विति वशमेव[3] तेनाव रुन्द्धे ॥ ८ ॥

०। ते[4]। वशः। तथा। अस्तु। इति। वशम्[3]। एव ।० ॥ ८ ॥

---

१ P °यानाम्।. २ P आतेह।. ३ B C E R S^m P J Cp °ति वश°. We with A B^h D K K^m V C^s P^2 and Dc which changes °ति वशमेव to °ति वशमेव. ४ P ते।.

ऐनं वशो गच्छति वशी वशिनां भवति य एवं वेद ॥ ९ ॥

आ । एनम् । वशः । गच्छति । वशी । वशिनाम् । भवति ।० ॥ ९ ॥

यदेनमाह व्रात्य यथा ते निकामस्तथास्त्विति निकाममेव तेनाव रुन्द्धे १०

यत् । एनम् । आह । व्रात्य । यथा । ते । निऽकामः । तथा । अस्तु । इति । निऽकामम् । एव । तेन । अव । रुन्द्धे ॥ १० ॥

ऐनं निकामो गच्छति निकामे निकामस्य भवति य एवं वेद ॥ ११ ॥

आ । एनम् । निऽकामः । गच्छति । निऽकामे । निऽकामस्य । भवति । यः । एवम् । वेद ॥ ११ ॥

इति द्वितीयेनुवाके चतुर्थं पर्यायसूक्तम् ॥

तद् यस्यैवं विद्वान् व्रात्य उद्धृतेष्वग्निष्वधिश्रितेग्निहोत्रेतिथिर्गृहानागच्छेत् ॥ १ ॥

०। व्रात्यः । उद्धृतेषु । अग्निषु । अधिऽश्रिते । अग्निऽहोत्रे । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्यातिं सृज होष्यामीति ॥ २ ॥

स्वयम् । एनम् । अभिऽउदत्य । ब्रूयात् । व्रात्य । अति । सृज । होष्यामि । इति ॥ २ ॥

स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ॥ ३ ॥

सः । च । अतिऽसृजेत् । जुहुयात् । न । च । अतिऽसृजेत् । न । जुहुयात् ॥ ३ ॥

स य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥ ४ ॥

सः । यः । एवम् । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ४ ॥

प्र पितृयाणं पन्थां जानाति प्र देवयानम् ॥ ५ ॥

---

१ A B B[h] C D S[m] ऐनं वशो ग°. E R एनं वशो गं°. K[m] ऐनं वशो ग°. Cs ऐनं वशो गं°. P J एनम् । वशः । गच्छति ।. P[2] एनम् । वशः । गच्छति ।. Cp आ । एनं । वशः । ग° ।. K V ऐनं वशो. The weight of authority is certainly in favour of the anudâtta. २ P P[2] J omit आ ।. In those MSS. which omit the आ it is to be supplied from verse 7. We with Cp. ३ P एनम् ।. ४ A D K K[m] V Cs P[2] जानाति. Dc जानाति changed to जानाति. We with B B[h] C E R S[m] P J Cp.

प्र । पितृऽयानम् । पन्थाम् । जानाति । प्र । देवऽयानम् ॥ ५ ॥

**न देवेष्वा वृश्चते हुतमस्य भवति ॥ ६ ॥**

न । देवेषु । आ । वृश्चते । हुतम् । अस्य । भवति ॥ ६ ॥

**पर्यस्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥ ७ ॥**

परि । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ७ ॥

**अथ य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥ ८ ॥**

अथ । यः । एवम् । विदुषा । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ८ ॥

**न पितृयाणं पन्थां जानाति न देवयानम् ॥ ९ ॥**

न । पितृऽयानम् । पन्थाम् । जानाति । न । देवऽयानम् ॥ ९ ॥

**आ देवेषु वृश्चते अहुतमस्य भवति ॥ १० ॥**

आ । देवेषु । वृश्चते । अहुतम् । अस्य । भवति ॥ १० ॥

**नास्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥ ११ ॥**

न । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ११ ॥

इति द्वितीयेनुवाके पञ्चमं पर्यायसूक्तम् ॥

**तद् यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति ॥ १ ॥**

०। व्रात्यः । एकाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥ १ ॥

**ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ २ ॥**

ये । पृथिव्याम् । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ २ ॥

**तद् यस्यैवं विद्वान् व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ॥ ३ ॥**

०। व्रात्यः । द्वितीयाम् । रात्रिम् ।० ॥ ३ ॥

---

१ P P[2] पथाम् ।. We with J Cp. २ See note 4, page 336. ३ B[h] K वृश्चतेहु॰. We with A B C D E K[m] R S[m] V Dc Cs. ४ P विदुषः ।.

४३

ये[१]ऽन्तरिक्षे पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ४ ॥

ये । अन्तरिक्षे । पुण्याः ।० ॥ ४ ॥

तद् यस्यैवं विद्वान् व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति ॥ ५ ॥

०। व्रात्यः । तृतीयाम् । रात्रिम् ।० ॥ ५ ॥

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ६ ॥

ये । दिवि । पुण्याः ।० ॥ ६ ॥

तद् यस्यैवं विद्वान् व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ॥ ७ ॥

०। व्रात्यः । चतुर्थीम् । रात्रिम् । अतिथिः ।० ॥ ७ ॥

ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ८ ॥

ये । पुण्यानाम् । पुण्याः ।० ॥ ८ ॥

तद् यस्यैवं विद्वान् व्रात्योपरिमिता रात्रीरतिथिर्गृहे वसति ॥ ९ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । अपरि[२]ऽमिताः । रात्रीः[३] । अतिथिः । गृहे । वसति ॥ ९ ॥

य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ १० ॥

ये । एव । अपरि[२]ऽमिताः । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ १० ॥

अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत् ॥ ११ ॥

अथ । यस्य । अव्रात्यः । व्रात्यऽब्रुवः । नामऽबिभ्रती । अतिथिः । गृहान् । आऽगच्छेत् ॥ ११ ॥

कर्षेदेनं न चैनं कर्षेत् ॥ १२ ॥

कर्षेत् । एनम् । न । च । एनम् । कर्षेत् ॥ १२ ॥

अस्यै देवताया उदकं याचामीमां देवतां वासय इमामिमां देवता परि वेवेष्मीत्येनं परि वेविष्यात् ॥ १३ ॥

अस्यै । देवतायै । उदकम् । याचामि । इमाम् । देवताम् । वासये । इमाम् । इमाम् । देवताम् । परि । वेवेष्मि[४] । इति । एनम् । परि । वेविष्यात् ॥ १३ ॥

तस्यामेवास्य तद् देवतायां हुतं भवति य एवं वेद ॥ १४ ॥

---

१ C येंत°. A B D K K̆ S̆ V Dc Cs ये अन्त°. We with B̆ E R. २ P °रि°।. ३ P रात्रिः।. ४ J वेवेप्मि।.

तस्याम् । एव । अस्य । तत् । देवतायाम् । हुतम् । भवति । यः । एवम् । वेद ॥ १४ ॥

इति द्वितीयेनुवाके षष्ठं पर्यायसूक्तम् ॥

स यत् प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वानुव्यचलन्मनोन्नादं[१] कृत्वा ॥ १ ॥

सः । यत् । प्राचीम् । दिशम् । अनु । विऽअचलत् । मारुतम् । शर्धः । भूत्वा । अनुऽव्यचिलत् । मनः । अन्नऽअदम् । कृत्वा ॥ १ ॥

मनसान्नादेनान्नमत्ति य एवं वेद ॥ २ ॥

मनसा । अन्नऽअदेन[२] । अन्नम् । अत्ति । यः ।० ॥ २ ॥

स यद् दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वानुव्यचलद् बलमन्नादं कृत्वा ॥ ३ ॥

०। यत् । दक्षिणाम् । दिशम् । अनु । विऽअचलत् । इन्द्रः । भूत्वा । अनुऽव्यचिलत् । बलम् । अन्नऽअदम् । कृत्वा ॥ ३ ॥

बलेनान्नादेनान्नमत्ति य एवं वेद ॥ ४ ॥

बलेन । अन्नऽअदेन । अन्नम् ।० ॥ ४ ॥

स यत् प्रतीचीं दिशमनु व्यचलद् वरुणो राजा भूत्वानुव्यचलदपोन्नादीः[४] कृत्वा ॥ ५ ॥

०। यत् । प्रतीचीम् । दिशम् । अनु । विऽअचलत् । वरुणः । राजा । भूत्वा । अनुऽव्यचिलत् । अपः । अन्नऽअदीः । कृत्वा ॥ ५ ॥

अद्भिरन्नादीभिरन्नमत्ति य एवं वेद ॥ ६ ॥

अत्ऽभिः । अन्नऽअदीभिः । अन्नम् ।० ॥ ६ ॥

स यदुदीचीं दिशमनु व्यचलत् सोमो राजा भूत्वानुव्यचलत् सप्तर्षिभि[६]र्हुत आहुतिमन्नादीं कृत्वा ॥ ७ ॥

०। यत् । उदीचीम् । दिशम् । अनु । विऽअचलत् । सोमः । राजा । भूत्वा । अनुऽव्यचिलत् । सप्तर्षिऽभिः । हुते । आऽहुतिम् । अन्नऽअदीम् । कृत्वा ॥ ७ ॥

---

१ E °नो°. २ P °अदनं ।. ३ P वि° ।. ४ A B C E K K̄ᵐ R °दपो°. Dc °दपो° changed to °दपों°. We with Bʰ D Sᵐ V Cs. ५ P दिशिम् ।. ६ A K °सप्तऋषि°.

आहुत्यान्नाद्यान्नमत्ति य एवं वेद ॥ ८ ॥

आऽहुत्या । अन्नऽअद्या । अन्नम् ।० ॥ ८ ॥

स यद् ध्रुवां दिशमनु व्यचलद् विष्णुर्भूत्वानुव्यचलद् विराजमन्नादीं कृत्वा ॥ ९ ॥

०। यत् । ध्रुवाम् । दिशम् । अनु । विऽअचलत् । विष्णुः । भूत्वा । अनुऽव्यचलत् । विऽराजम् । अन्नऽअदीम् । कृत्वा ॥ ९ ॥

विराजान्नाद्यान्नमत्ति य एवं वेद ॥ १० ॥

विऽराजा । अन्नऽअद्या । अन्नम् ।० ॥ १० ॥

स यत् पशूननु व्यचलद् रुद्रो भूत्वानुव्यचलदोषधीरन्नादीः कृत्वा ॥११॥

०। यत् । पशून् । अनु । विऽअचलत् । रुद्रः । भूत्वा । अनुऽव्यचलत् । ओषधीः । अन्नऽअदीः । कृत्वा ॥ ११ ॥

ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद ॥ १२ ॥

ओषधीभिः । अन्नऽअदीभिः । अन्नम् ।० ॥ १२ ॥

स यत् पितॄननु व्यचलद् यमो राजा भूत्वानुव्यचलत् स्वधाकारमन्नादं कृत्वा ॥ १३ ॥

०। यत् । पितॄन् । अनु । विऽअचलत् । यमः । राजा । भूत्वा। अनुऽव्यचलत् । स्वधाऽकारम् । अन्नऽअदम् । कृत्वा ॥ १३ ॥

स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद ॥ १४ ॥

स्वधाऽकारेण । अन्नऽअदेन । अन्नम् ।० ॥ १४ ॥

स यन्मनुष्या३ ननु व्यचलदग्निर्भूत्वानुव्यचलत् स्वाहाकारमन्नादं कृत्वा ॥ १५ ॥

०। यत् । मनुष्यान् । अनु । विऽअचलत् । अग्निः । भूत्वा । अनुऽव्यचलत् । स्वाहाऽकारम् । अन्नऽअदम् ।० ॥ १५ ॥

स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद ॥ १६ ॥

स्वाहाऽकारेण । अन्नऽअदेन ।० ॥ १६ ॥

स यदूर्ध्वां दिशमनु व्यचलद् बृहस्पतिर्भूत्वानुव्यचलद् वषट्कारमन्नादं कृत्वा ॥ १७ ॥

०। यत्। ऊर्ध्वाम्। दिशम्। अनु। विऽअचलत्। बृहस्पतिः। भूत्वा। अनुऽव्यचलत्। वषट्ऽकारम्। अन्नऽअदम्।० ॥ १७ ॥

वषट्कारेणान्नादेनान्नमत्ति य एवं वेद ॥ १८ ॥

वषट्ऽकारेण। अन्नऽअदेन।० ॥ १८ ॥

स यद् देवाननु व्यचलदीशानो भूत्वानुव्यचलन्मन्युमन्नादं कृत्वा ॥१९॥

०। यत्। देवान्। अनु। विऽअचलत्। ईशानः। भूत्वा। अनुऽऽव्यचलत्। मन्युम्। अन्नऽअदम्।० ॥ १९ ॥

मन्युनान्नादेनान्नमत्ति य एवं वेद ॥ २० ॥

मन्युना। अन्नऽअदेन।० ॥ २० ॥

स यत् प्रजा अनु व्यचलत् प्रजापतिर्भूत्वानुव्यचलत् प्राणमन्नादं कृत्वा ॥ २१ ॥

०। यत्। प्रऽजाः। अनु। विऽअचलत्। प्रजाऽपतिः। भूत्वा। अनुऽव्यचलत्। प्राणम्। अन्नऽअदम्।० ॥ २१ ॥

प्राणेनान्नादेनान्नमत्ति य एवं वेद ॥ २२ ॥

प्राणेन। अन्नऽअदेन।० ॥ २२ ॥

स यत् सर्वानन्तर्देशाननु व्यचलत् परमेष्ठी भूत्वानुव्यचलद् ब्रह्मान्नादं कृत्वा ॥ २३ ॥

सः। यत्। सर्वान्। अन्तःऽदेशान्। अनु। विऽअचलत्। परमेऽस्थी। भूत्वा। अनुऽव्यचिलत्। ब्रह्म। अन्नऽअदम्। कृत्वा ॥ २३ ॥

ब्रह्मणान्नादेनान्नमत्ति य एवं वेद ॥ २४ ॥

ब्रह्मणा। अन्नऽअदेन। अन्नम्। अत्ति। यः। एवम्। वेद ॥ २४ ॥

इति द्वितीयेनुवाके सप्तमं पर्यायसूक्तम् ॥

तस्य व्रात्यस्य ॥ १ ॥

तस्य। व्रात्यस्य ॥ १ ॥

सप्त प्राणाः सप्तापानाः सप्त व्यानाः ॥ २ ॥

सप्त । प्राणाः । सप्त । अपानाः । सप्त । विऽआनाः ॥ २ ॥

तस्य[1] व्रात्यस्य । योस्य प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ॥ ३ ॥

०। यः । अस्य । प्रथमः । प्राणः । ऊर्ध्वः । नाम । अयम् । सः । अग्निः ॥ ३ ॥

तस्य[1] व्रात्यस्य । योस्य द्वितीयः प्राणः प्रौढो नामासौ स आदित्यः ॥ ४ ॥

०। अस्य । द्वितीयः । प्राणः । प्रऽऊढः । नाम । असौ । सः । आदित्यः ॥ ४ ॥

तस्य व्रात्यस्य । योस्य तृतीयः प्राणो३ऽभ्यूढो[2] नामासौ स चन्द्रमाः ॥ ५ ॥

०। अस्य । तृतीयः । प्राणः । अभिऽऊढः[3] । नाम । असौ । सः । चन्द्रमाः ॥ ५ ॥

तस्य व्रात्यस्य । योस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ॥ ६ ॥

०। अस्य । चतुर्थः । प्राणः । विऽभूः । नाम । अयम् । सः । पवमानः ॥ ६ ॥

तस्य व्रात्यस्य । योस्य पञ्चमः प्राणो योनिर्नाम[4] ता इमा आपः ॥ ७ ॥

०। अस्य । पञ्चमः । प्राणः । योनिः । नाम । ताः । इमाः । आपः ॥ ७ ॥

तस्य व्रात्यस्य । योस्य षष्ठः प्राणः प्रियो नाम त इमे पशवः ॥ ८ ॥

अस्य । षष्ठः । प्राणः । प्रियः । नाम । ते[5] । इमे । पशवः[6] ॥ ८ ॥

तस्य व्रात्यस्य । योस्य सप्तमः प्राणोपरिमितो[7] नाम ता इमाः प्रजाः ॥ ९ ॥

०। अस्य । सप्तमः । प्राणः । अपरिऽमितः । नाम । ताः । इमाः । प्रऽजाः ॥ ९ ॥

इति द्वितीयेनुवाके अष्टमं पर्यायसूक्तम् ॥

तस्य व्रात्यस्य । योस्य प्रथमोपानः[8] सा पौर्णमासी ॥ १ ॥

०। प्रथमः । अपानः । सा । पौर्णऽमासी ॥ १ ॥

तस्य व्रात्यस्य । योस्य द्वितीयोपानः साष्टका ॥ २ ॥

०। द्वितीयः । अपानः । सा । अष्टका ॥ २ ॥

तस्य व्रात्यस्य । योस्य तृतीयोपानः सामावास्या ॥ ३ ॥

०। तृतीयः । अपानः । सा । अमाऽवास्या ॥ ३ ॥

---

१ So we with all our authorities. See Rw. २ A B[h] C D E R S[m] Cs °भ्यूढो. We with K K[m] V and Dc, the last changing °भ्यूढो to °भ्यूंढो. ३ P J Cp अभिऽऊढः ।. We with P[2]. ४ D योनिर्णाम. ५ P ते ।. ६ P पश्वः ।. ७ B °मितौ. ८ A B[h] R प्रथमोपानः. C °थमोपानः.

तस्य॒ व्रात्य॑स्य । योऽस्य च॒तु॒र्थोऽ॑पा॒नः सा श्र॒द्धा ॥ ४ ॥[1]

०। च॒तु॒र्थः । अ॒पा॒नः । सा । श्र॒द्धा ॥ ४ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य प॒ञ्च॒मोऽ॑पा॒नः सा दी॒क्षा ॥ ५ ॥[2]

०। प॒ञ्च॒मः । अ॒पा॒नः । सा । दी॒क्षा ॥ ५ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य ष॒ष्ठोऽ॑पा॒नः स य॒ज्ञः ॥ ६ ॥[3]

०। ष॒ष्ठः । अ॒पा॒नः । सः । य॒ज्ञः ॥ ६ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य स॒प्त॒मोऽ॑पा॒नस्ता इ॒मा दक्षि॑णाः ॥ ७ ॥[4]

स॒प्त॒मः । अ॒पा॒नः । ताः । इ॒माः । दक्षि॑णाः ॥ ७ ॥

इति द्वितीयेऽनुवाके नवमं पर्यायसूक्तम् ॥

तस्य॒ व्रात्य॑स्य । योऽस्य प्र॒थ॒मो व्या॒नः सेयं भूमि॑ः ॥ १ ॥

०। अ॒स्य॒ । प्र॒थ॒मः । वि॒ऽआ॒नः । सा । इ॒यम् । भूमि॑ः ॥ १ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य द्वि॒तीयो॑ व्या॒नस्तद॒न्तरि॑क्षम् ॥ २ ॥

०। अ॒स्य॒ । द्वि॒तीय॑ः । वि॒ऽआ॒नः । तत् । अ॒न्तरि॑क्षम् ॥ २ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य तृ॒तीयो॑ व्या॒नः सा द्यौः ॥ ३ ॥

०। अ॒स्य॒ । तृ॒तीय॑ः । वि॒ऽआ॒नः । सा । द्यौः ॥ ३ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य च॒तु॒र्थो व्या॒नस्तानि॒ नक्ष॑त्राणि ॥ ४ ॥

०। अ॒स्य॒ । च॒तु॒र्थः । वि॒ऽआ॒नः । तानि॑ । नक्ष॑त्राणि ॥ ४ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य प॒ञ्च॒मो व्या॒नस्त ऋ॒तवः॑ ॥ ५ ॥

०। अ॒स्य॒ । प॒ञ्च॒मः । वि॒ऽआ॒नः । ते । ऋ॒तवः॑ ॥ ५ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य ष॒ष्ठो व्या॒नस्त आ॑र्त॒वाः ॥ ६ ॥

०। अ॒स्य॒ । ष॒ष्ठः । वि॒ऽआ॒नः । ते[5] । आ॒र्त॒वाः ॥ ६ ॥

तस्य॒ व्रात्य॑स्य । योऽस्य स॒प्त॒मो व्या॒नः स सं॑वत्स॒रः ॥ ७ ॥

०। यः । अ॒स्य॒ । स॒प्त॒मः । वि॒ऽआ॒नः । सः । स॒म्ऽव॒त्स॒रः ॥ ७ ॥

---

१ C R चतुर्थो॑°. २ A B B^h C R पञ्च॒मो॑°. We with D E K K^m S^m V Dc Cs. ३ A B^h C K K^m R ष॒ष्ठो॑°. We with D E K^m S^m V Dc Cs. ४ A B B^h C K R स॒प्त॒मो॑°. We with D E K^m S^m V Dc Cs. ५ P ते॒ । आ॒र्त॒वः ।.

तस्य व्रात्यस्य । समानमर्थं परि यन्ति देवाः संवत्सरं वा एतदृतवोनु-
परियन्ति व्रात्यं च ॥ ८ ॥

समानम् । अर्थम् । परि । यन्ति । देवाः । सम्ऽवत्सरम् । वै । एतत् । ऋतवः । अनुऽप-
रियन्ति । व्रात्यम् । च ॥ ८ ॥

तस्य व्रात्यस्य । यदादित्यमभिसंविशन्त्यमावास्यां[1] चैव तत्पौर्णमासीं च ॥ ९ ॥

०। यत् । आदित्यम् । अभिऽसंविशन्ति । अमाऽवास्याम् । च । एव । तत् । पौर्णऽमा-
सीम् । च ॥ ९ ॥

तस्य व्रात्यस्य । एकं तदेषाममृतत्वमित्याहुतिरेव ॥ १० ॥

एकम् । तत् । एषाम् । अमृतऽत्वम् । इति । आऽहुतिः । एव ॥ १० ॥

इति द्वितीयेनुवाके दशमं पर्यायसूक्तम् ॥

तस्य व्रात्यस्य ॥ १ ॥

तस्य । व्रात्यस्य ॥ १ ॥

यदस्य दक्षिणमक्ष्यसौ स आदित्यो यदस्य सव्यमक्ष्यसौ स चन्द्रमाः ॥ २ ॥

यत् । अस्य । दक्षिणम् । अक्षि । असौ । सः । आदित्यः । यत् । अस्य । सव्यम् । अक्षि ।
असौ । सः । चन्द्रमाः ॥ २ ॥

योस्य दक्षिणः कर्णोयं सो अग्निर्योस्य सव्यः कर्णोयं स पवमानः ॥ ३ ॥

यः । अस्य । दक्षिणः । कर्णः । अयम् । सः । अग्निः । यः । अस्य । सव्यः । कर्णः । अ-
यम् । सः । पवमानः ॥ ३ ॥

अहोरात्रे नासिके दितिश्चादितिश्च शीर्षकपाले संवत्सरः शिरः ॥ ४ ॥

अहोरात्रे इति । नासिके इति । दितिः । च । अदितिः । च । शीर्षकपाले इति शीर्षऽक-
पाले । सम्ऽवत्सरः । शिरः ॥ ४ ॥

अह्ना प्रत्यङ् व्रात्यो रात्र्या प्राङ् नमो व्रात्याय ॥ ५ ॥

अह्ना । प्रत्यङ् । व्रात्यः । रात्र्या । प्राङ् । नमः । व्रात्याय ॥ ५ ॥

द्वितीयेनुवाक एकादशं पर्यायसूक्तम् ॥

द्वितीयोनुवाकः ॥

इति पञ्चदशं काण्डं समाप्तम् ॥

---

१ A B B̊ C R P Cp °वास्यां. We with D E K K̊ S̊ V Dc C. P̊ J. २ B̊ C D E R S̊ Cs P J Cp तदेषा°. We with K K̊ V Dc P̊.

कतिषुचित् कर्मसु शान्त्युदकं विहितम्। तेन हि आचमनप्रोक्षणावसेचनासेचनाप्लावनानि कर्तव्यानि भवन्ति। तच्छान्त्युदकं कतिभिश्चिच्छान्तिनामकैः सूक्तैः कर्तव्यं भवति। तत् कांस्यपात्रे कर्तव्यम्। तथाकरणात्पूर्वम् "अतिसृष्टो अपां वृषभः" इति सूक्तेन अपोतिसृज्य अवकरं विसर्जयति। कांस्यपात्रे अपोवसिच्य ताभिस्तन्मध्यगतं मलं निर्गमयतीत्यर्थः। इति सांप्रदायिकाः। सूत्रितं हि। "अतिसृष्टो अपां वृषभ इत्यपोतिसृज्य" इति [कौ° १.९]॥

**अतिसृष्टो अपां वृषभोतिसृष्टा अग्नयो दिव्याः ॥ १ ॥**

अति॑ऽसृष्टः। अपाम्। वृषभः। अति॑ऽसृष्टाः। अग्नयः। दिव्याः ॥ १ ॥

**रुजन् परिरुजन् मृणन् प्रमृणन् ॥ २ ॥**

रुजन्। परि॑ऽरुजन्। मृणन्। प्रऽमृणन् ॥ २ ॥

**म्रोको मनोहा खनो निर्दाह आत्मदूषिस्तनूदूषिः ॥ ३ ॥**

म्रोकः। मनः॑ऽहा। खनः। निः॑ऽदाहः[1]। आत्मऽदूषिः। तनूऽदूषिः ॥ ३ ॥

**इदं तमति सृजामि तं माभ्यवनिक्षि ॥ ४ ॥**

इदम्। तम्। अति॑। सृजामि। तम्। मा। अभि॑ऽअवनिक्षि ॥ ४ ॥

**तेन तमभ्यतिसृजामो यो३[2]स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥**

तेन॑। तम्। अभि॑ऽअति॑सृजामः। यः। अस्मान्। द्वेष्टि। यम्। वयम्। द्विष्मः ॥ ५ ॥

**अपामग्रमसि समुद्रं वोभ्यवसृजामि ॥ ६ ॥**

अपाम्। अग्रम्। असि। समुद्रम्। वः। अभि॑ऽअवसृजामि ॥ ६ ॥

**यो३[3]प्स्व१ग्निरति तं सृजामि म्रोकं खनिं तनूदूषिम् ॥ ७ ॥**

यः। अप्ऽसु। अग्निः। अति॑। तम्[4]। सृजामि। म्रोकम्। खनिम्। तनूऽदूषिम् ॥ ७ ॥

**यो व आपोग्निराविवेश स एष यद् वो घोरं तदेतत् ॥ ८ ॥**

यः। वः। आपः। अग्निः। आऽविवेश। सः। एषः। यत्। वः। घोरम्। तत्। एतत् ॥ ८ ॥

**इन्द्रस्य व इन्द्रियेणाभि षिञ्चेत् ॥ ९ ॥**

---

१ P °हाः। २ C D K V १ for ३. We with B̊[h] E K̊[m] R S̊[m] Dc Cs. ३ B C K V १ for ३. We with B̊[h] D E K̊[m] R S̊[m] Dc Cs. ४ P̊[2] तत्।

इन्द्रस्य । वः । इन्द्रियेण । अभि । सिञ्चेत् ॥ ९ ॥

**अरिप्रा आपो अप रिप्रमस्मत् ॥ १० ॥**

अरिप्राः । आपः । अप । रिप्रम् । अस्मत् ॥ १० ॥

**प्रास्मदेनो वहन्तु प्र दुष्वप्न्यं वहन्तु ॥ ११ ॥**

प्र । अस्मत् । एनः । वहन्तु । प्र । दुःऽस्वप्न्यम् । वहन्तु ॥ ११ ॥

**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ॥ १२ ॥**

शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तन्वा । उप । स्पृशत । त्वचम् । मे ॥ १२ ॥

**शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवीः ॥ १३ ॥**

शिवान् । अग्नीन् । अप्सुऽसदः । हवामहे । मयि । क्षत्रम् । वर्चः । आ । धत्त । देवीः[1] ॥ १३ ॥

इति प्रथमेनुवाके प्रथमं पर्यायसूक्तम् ॥

मरणं व्यसन चैव बन्धन च विशेषतः ।
प्रणिपातोन्मत्तता वा दैवोपहतिरेव च ।
पुत्रादिधननाशश्च गृहे दोषान् बहूनपि ।

एतानि सर्वाणि कानिचिद्वा तेषा मध्ये यथा शत्रोर्भवन्ति तथोद्देशेन यत् कर्म तद् अभिचारकर्म । एतन्नामक. कर्मविशेषः । तादृशस्याभिचारकर्मणः समाप्तौ अवभृथं स्नात्वा "निर्दुरर्मण्यः" इति सूक्तेन सर्वौषधिभिर्नाम कैश्चिदोषधिविशेषैरात्मानम् अभिमृशति । तद् उक्त कौशिकेन । "निर्दुरर्मण्य इति संधाव्याभिमृशति" इति [कौ° ६. ३] ॥ अभिचार कृत्वा कर्ता शान्तिमिमा करोतीत्यर्थः ॥

तथा उपनयनकर्मणि अनेन सूक्तेन कुङ्कुमचन्दनसर्वौषध्यादिना शरीरं समालभ्य आत्मानम् अभिमन्त्रयत आयुष्कामः । सूत्रितं हि । "निर्दुरर्मण्य इति संधाव्य" इति [कौ° ७. ९] ॥

तथा चक्षुरादीन्द्रियदार्ढ्यकामः अरण्ये गत्वा अनेन सूक्तेन सर्वौषधिम् अभिमन्त्र्य अनुलोम प्रलिम्पति । तथा च सूत्रम् । "निर्दुरर्मण्य इति सर्वसुरभिचूर्णैररण्येऽप्रतीहारं प्रलिम्पति" इति [कौ° ७. ९] ॥

श्रोत्र वाग् मनश्चक्षुर्दन्ता नासिका अन्यच्च सर्व विकलेन्द्रियं दृढ भवति । यो विकलेन्द्रियस्तस्येद कर्म ॥

**निर्दुरर्मण्य ऊर्जा मधुमती वाक् ॥ १ ॥**

निः । दुःऽअर्मण्यः । ऊर्जा[2] । मधुऽमती । वाक् ॥ १ ॥

**मधुमती[3] स्थ मधुमतीं वाचमुदेयम् ॥ २ ॥**

मधुऽमतीः[4] । स्थ । मधुऽमतीम् । वाचम् । उदेयम् ॥ २ ॥

---

१ P² देवीः ।. २ None of our authorities have ऊर्जाः ।. ३ B^h मधुमतीः. ४ P P² J मधुऽमती ।. J once had the visarga, but has subsequently removed it. We with Cp.

उप॑हूतो मे गो॒पा उप॑हूतो गोपी॒थः ॥ ३ ॥

उप॑ऽहूतः । मे॒ । गो॒पाः । उप॑ऽहू॑तः । गो॒पी॒थः ॥ ३ ॥

सु॒श्रु॒तौ॒ कर्णौ॑ भ॒द्र॒श्रु॒तौ॒ कर्णौ॑ भ॒द्रं श्लोकं॑ श्रूयासम् ॥ ४ ॥

सु॒ऽश्रु॒तौ॑ । कर्णौ॑ । भ॒द्र॒ऽश्रु॒तौ॑ । कर्णौ॑ । भ॒द्रम् । श्लोक॑म् । श्रू॒या॒स॒म् ॥ ४ ॥

सु॒श्रु॑तिश्च॒ मोप॑श्रुतिश्च॒ मा हा॑सिष्टां॒ सौप॑र्णं॒ चक्षु॒रज॑स्रं॒ ज्योतिः॑ ॥ ५ ॥

सु॒ऽश्रु॑तिः । च॒ । मा॒ । उप॑ऽश्रुतिः । च॒ । मा । हा॒सि॒ष्टा॒म् । सौप॑र्णम् । चक्षुः॑ । अज॑स्रम् । ज्योतिः॑ ॥ ५ ॥

ऋषी॑णां प्र॒स्त॒रो॑ऽसि॒ नमो॑ऽस्तु॒ दैवा॑य प्र॒स्त॒राय॑ ॥ ६ ॥

ऋषी॑णाम् । प्र॒ऽस्त॒रः । अ॒सि॒ । नमः॑ । अ॒स्तु॒ । दैवा॑य । प्र॒ऽस्त॒राय॑ ॥ ६ ॥

इति प्रथमेनुवाके द्वितीयं पर्यायसूक्तम् ॥

उपनयने "मूर्धाह" "नाभिरहम्" इति सूक्ताभ्याम् आयुरभिवृद्ध्यर्थं माणवक उद्यन्तम् आदित्यम् उपतिष्ठते । तद् उक्तं कौशिकेन । "मूर्धाहम् [१६.३] विषासहिम् [१७.१] इत्युद्यन्तम् उपतिष्ठते" इत्यादि [कौ॰ ७.९] ॥

मू॒र्धाहं र॑यी॒णां मू॒र्धा स॑माना॒नां भू॑यासम् ॥ १ ॥

मू॒र्धा । अ॒हम् । र॒यी॒णाम् । मू॒र्धा । स॒मा॒ना॒नाम् । भू॒या॒स॒म् ॥ १ ॥

रु॒जश्च॑ मा वे॒नश्च॒ मा हा॑सिष्टां मू॒र्धा च॑ मा विध॑र्मा च॒ मा हा॑सिष्टाम् ॥ २ ॥

रु॒जः । च॒ । मा॒ । वे॒नः । च॒ । मा । हा॒सि॒ष्टा॒म् । मू॒र्धा । च॒ । मा॒ । वि॒ऽध॑र्मा । च॒ । मा॑ । हा॒सि॒ष्टा॒म् ॥ २ ॥

उ॒र्वश्च॑ मा चम॒सश्च॒ मा हा॑सिष्टां ध॒र्ता च॑ मा ध॒रुण॑श्च॒ मा हा॑सिष्टाम् ॥ ३ ॥

उ॒र्वः । च॒ । मा॒ । च॒म॒सः । च॒ । मा॑ । हा॒सि॒ष्टा॒म् । ध॒र्ता । च॒ । मा॒ । ध॒रुणः॑ । च॒ । ० ॥ ३ ॥

वि॒मो॒कश्च॑ मा॒र्द्रप॑विश्च॒ मा हा॑सिष्टामा॒र्द्रदा॑नुश्च॑ मा मा॒त॒रिश्वा॑ च॒ मा हा॑सिष्टाम् ॥ ४ ॥

वि॒ऽमो॒कः । च॒ । मा॒ । आ॒र्द्रऽप॑विः । च॒ । मा । हा॒सि॒ष्टा॒म् । आ॒र्द्रऽदा॑नुः । च॒ । मा॒ । मा॒त॒रिश्वा॑ । च॒ । मा । हा॒सि॒ष्टा॒म् ॥ ४ ॥

बृह॒स्पति॑र्म आ॒त्मा नृ॒मणा॒ नाम॒ हृद्यः॑ ॥ ५ ॥

---

१ Cp °हु° ।. We with P P[2] J. २ P सुश्रुतिः ।. ३ R S[m] Cs प्रस्तरो°. We with A B[h] C D E K K[m] V Dc. ४ P मा ।. ५ R S[m] °दानुश्च.

बृहस्पतिः । मे । आत्मा । नृऽमनाः[1] । नाम । हृद्यः ॥ ५ ॥

**असंतापं मे हृदयमुर्वी गव्यूतिः समुद्रो अस्मि विधर्मणा ॥ ६ ॥**

असम्ऽतापम् । मे । हृदयम् । उर्वी । गव्यूतिः । समुद्रः । अस्मि । विऽधर्मणा ॥ ६ ॥

इति प्रथमेऽनुवाके तृतीयं पर्यायसूक्तम् ॥

"नाभिरहम्" इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ॥

**नाभिरहं रयीणां नाभिः समानानां भूयासम् ॥ १ ॥**

नाभिः । अहम् । रयीणाम् । नाभिः । समानानाम् । भूयासम् ॥ १ ॥

**स्वासदसि सूषा[2] अमृतो मर्त्येष्वा ॥ २ ॥**

सुऽआसत् । असि । सुऽउषाः । अमृतः । मर्त्येषु । आ ॥ २ ॥

**मा मां प्राणो हासीन्मो अपानोऽवहाय[4] परा गात् ॥ ३ ॥**

मा । माम्[3] । प्राणः । हासीत् । मो इति । अपानः । अवऽहाय । परा । गात् ॥ ३ ॥

**सूर्यो माह्नः पात्वग्निः पृथिव्या वायुरन्तरिक्षाद् यमो मनुष्येभ्यः सरस्वती पार्थिवेभ्यः ॥ ४ ॥**

सूर्यः । मा । अह्नः । पातु । अग्निः । पृथिव्याः । वायुः । अन्तरिक्षात् । यमः । मनुष्येभ्यः । सरस्वती । पार्थिवेभ्यः ॥ ४ ॥

**प्राणापानौ मा मा हासिष्टं मा जने प्र मेषि ॥ ५ ॥**

प्राणापानौ । मा[5] । मा । हासिष्टम् । मा । जने । प्र । मेषि ॥ ५ ॥

**स्वस्त्य१[6]द्योषसो[7] दोषसश्च सर्व आपः सर्वगणो अशीय ॥ ६ ॥**

स्वस्ति । अद्य । उषसः । दोषसः । च । सर्वः । आपः[8] । सर्वऽगणः । अशीय[9] ॥ ६ ॥

**शक्वरी[10] स्थ पशवो मोप स्थेषुर्मित्रावरुणौ मे प्राणापानावग्निर्मे दक्षं दधातु ॥ ७ ॥**

---

१ P J °मना।. २ K पूषा. E षूषा. ३ A B C E R Cs P J Cp मां. We with D K K S V Dc P. ४ A B C E K R °नोवहाय. We with D K S V Dc Cs. ५ P मा।. ६ A B C D E R S Dc Cs °स्त्य३° for °स्त्यं१°. K K V °स्त्या३°. ७ A D E R Cs °द्यो° (which means ।१). C K १. P Cp अद्य।. We with K S V Dc. ८ P आपः।. ९ P आशीय।. १० B B शक्वरीः.

शार्करीः । स्थ । पशर्वः । मा । उप । स्थेषुः[1] । मित्रावरुणौ । मे । प्राणापानौ । अग्निः । मे । दक्षम् । दधातु ॥ ७ ॥

प्रथमेऽनुवाके चतुर्थं पर्यायसूक्तम् ॥

इति प्रथमोऽनुवाकः ॥

दुःस्वप्नदर्शने शान्तावेतत् पर्यायसूक्तं विनियुज्यते । तद्यथा । "विद्म ते स्वप्न" इत्येकेन पर्यायेण दुःस्वप्नं दृष्ट्वा मुखं विमार्ष्टि ॥

तथा अतिघोर दुःस्वप्नं दृष्ट्वा अनेन सूक्तेन मैश्रधान्यं पुरोडाश जुहोति ॥

तथा "विद्म ते स्वप्न" इति सूक्तेन दुःस्वप्नं दृष्ट्वा पार्श्वेन द्वितीयेन भूयते । येन पार्श्वेन दुःस्वप्नो दृष्टस्ततोऽन्येन पार्श्वेन शेत इत्यर्थः ॥

तथा अनेन सूक्तेन अन्नं स्वप्ने दृष्ट्वा निरीक्षते ॥

तद् उक्त कौशिकेन । "विद्म ते स्वप्नेति सर्वेषाम् अप्ययः" इति [कौ॰५. १०] ॥

विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥

विद्म । ते । स्वप्न । जनित्रम् । ग्राह्याः । पुत्रः । असि । यमस्य । करणः ॥ १ ॥

अन्तकोऽसि मृत्युरसि ॥ २ ॥

अन्तकः । असि । मृत्युः । असि ॥ २ ॥

तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्[2] पाहि ॥ ३ ॥

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः । स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥ ३ ॥

विद्म ते स्वप्न जनित्रं निर्ऋत्याः पुत्रोऽसि यमस्य करणः ।०।० ॥ ४ ॥

०। जनित्रम् । निःऽऋत्याः । पुत्रः ।० ॥ ४ ॥

विद्म ते स्वप्न जनित्रमभूत्याः पुत्रोऽसि ०।०।० ॥ ५ ॥

०। जनित्रम् । अभूत्याः । पुत्रः ।० ॥ ५ ॥

विद्म ते स्वप्न जनित्रं निर्भूत्याः पुत्रोऽसि ०।०।० ॥ ६ ॥

०। जनित्रम् । निःऽभूत्याः । पुत्रः ।० ॥ ६ ॥

विद्म ते स्वप्न जनित्रं पराभूत्याः पुत्रोऽसि ०।०।० ॥ ७ ॥

०। जनित्रम् । पराऽभूत्याः । पुत्रः ।० ॥ ७ ॥

विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ॥ ८ ॥

---

१ P P[2] J स्थेषु ।. We with Cp. २ A B B[h] E R Dc Cs दुःष्व॰. We with C D K[m] S[m] V.

विघ्न । ते । स्वप्न । जनित्रम् । देवऽजामीनाम् । पुत्रः । असि । यमस्य । करणः ॥ ८ ॥

अन्तकोसि मृत्युरसि ॥ ९ ॥

अन्तकः । असि । मृत्युः । असि ॥ ९ ॥

तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥ १० ॥

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः । स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥ १० ॥

इति द्वितीयेनुवाके प्रथमं पर्यायसूक्तम् ॥

अभिचारकर्मणि "अजैष्म" इत्यादिपर्यायसूक्तचतुष्टयेन शत्रुषु पाशान् बद्धाभिमन्त्र्य निखनति ॥

तथा तत्रैव कर्मणि अनेन पर्यायचतुष्टयेन "अगन्म स्वः" इति अवसानद्वयवर्जितेन पदेपदे पाशान् बध्नाति ॥

तथा तत्रैव कर्मणि अनेन अवसानद्वयवर्जितेन अधिपाशान् बाधकान् शङ्कून् सक्तुय भ्रष्ट्रेभ्यसति ॥

तथा तत्रैव कर्मणि एतैश्चतुर्भिः पर्यायैः "अगन्म स्वः" इत्यवसानद्वयवर्जितैः रक्तशालिक्षीरौदनम् अभिमन्त्र्य ददाति ॥

तथा तत्रैव कर्मणि उक्तैरेव पर्यायैर्वृषभ सपातवन्त कृत्वा शत्रुगृहान् अभि सृजति ॥

तथा तत्रैव कर्मणि उक्तैः पर्यायैर्गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्र संपातान् आनयति ॥

सूत्रितं हि "अजैष्मेत्यधिपाशान् आदधाति । पदेपदे पाशान् बध्नाति । अधिपाशान् बाधका छङ्कुन्तान् सक्तुय सनत्य भ्रष्ट्रेभ्यस्यति । अशिशिषोः क्षीरौदनादीनि त्रीणि । गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्रं सपातान् अभ्यातिनयति" इति [कौ° ६. ३] ॥

"अगन्म स्वः" इत्यवसानद्वयेन आदित्यम् ईक्षते सर्वेषु तन्त्रेषु । तदुक्तं कौशिकेन । "अगन्म स्वरित्यादित्यमीक्षते" इति [कौ° १. ६] ॥

अजैष्माद्यासनामाद्याभूमानागसो वयम् ॥ १ ॥

अजैष्म । अद्य । असनाम । अद्य । अभूम । अनागसः । वयम् ॥ १ ॥

उषो यस्माद् दुष्वप्न्यादभैष्माप तदुच्छतु ॥ २ ॥

उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ॥ २ ॥

द्विषते तत् परा वह शपते तत् परा वह ॥ ३ ॥

द्विषते । तत् । परा । वह । शपते । तत् । परा । वह ॥ ३ ॥

यं द्विष्मो यच्च नो द्वेष्टि तस्मा एनद् गमयामः ॥ ४ ॥

यम् । द्विष्मः । यत् । च । नः । द्वेष्टि । तस्मै । एनत् । गमयामः ॥ ४ ॥

उषा देवी वाचा संविदाना वाग् देव्युषसा संविदाना ॥ ५ ॥

---

१ B B[h] E D R S[m] Dc दुःष्व°. We with A C K K[m] V. २ B[h] R S[m] Dc °दुःष्व°. ३ So we with all our authorities. See Rw. ४ P[2] एनम् ।. ५ D °व्यु१°. A B B[h] R Dc Cs °व्यु३°. C E K K[m] S[m] V °व्यू३°.

उषाः । देवी । वाचा । सम्ऽविदाना । वाक् । देवी । उषसा । सम्ऽविदाना ॥ ५ ॥

उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदानः ॥ ६ ॥

उषः । पतिः । वाचः । पतिना । सम्ऽविदानः । वाचः । पतिः । उषः । पतिना । सम्ऽविदानः ॥ ६ ॥

ते[1]ऽमुष्मै परा वहन्त्वरायान् दुर्णाम्नः सदान्वाः ॥ ७ ॥

ते । अमुष्मै । परा । वहन्तु । अरायान् । दुःऽनाम्नः । सदान्वाः ॥ ७ ॥

कुम्भीका दूषीकाः पीयकान् ॥ ८ ॥

कुम्भीकाः । दूषीकाः । पीयकान् ॥ ८ ॥

जाग्रद्दुष्वप्न्यं[2] स्वप्नेदुष्वप्न्यम्[2] ॥ ९ ॥

जाग्रत्ऽदुःस्वप्न्यम्[2] । स्वप्नेऽदुःस्वप्न्यम्[2] ॥ ९ ॥

अनागमिष्यतो वरानवित्तेः संकल्पानमुच्या द्रुहः पाशान् ॥ १० ॥

अनागमिष्यतः । वरान् । अवित्तेः । सम्ऽकल्पान् । अमुच्याः[3] । द्रुहः । पाशान् ॥ १० ॥

तदमुष्मा अग्ने देवाः परा वहन्तु वध्रिर्यथासद्[4] विथुरो न साधुः ॥ ११ ॥

तत् । अमुष्मै । अग्ने । देवाः । परा । वहन्तु । वध्रिः । यथा । असत् । विथुरः[4] । न । साधुः ॥ ११ ॥

इति द्वितीयेनुवाके द्वितीयं पर्यायसूक्तम् ॥

तेनैनं विध्याम्यभूत्यैनं विध्यामि निर्भूत्यैनं विध्यामि पराभूत्यैनं विध्यामि ग्राह्यैनं विध्यामि तमसैनं विध्यामि ॥ १ ॥

तेन । एनम् । विध्यामि । अभूत्या । एनम् । विध्यामि । निःऽभूत्या । एनम् । विध्यामि । पराऽभूत्या । एनम् । विध्यामि । ग्राह्या । एनम् । विध्यामि । तमसा । एनम् । विध्यामि ॥ १ ॥

देवानामेनं घोरैः क्रूरैः प्रैषैरभिप्रेष्यामि ॥ २ ॥

देवानाम् । एनम् । घोरैः । क्रूरैः । प्रऽएषैः । अभिऽप्रेष्यामि ॥ २ ॥

---

१ B^h V १ for ३. २ B E R Dc °दुःष्व°. We with A B^h C D K K^m S^m V Cs P P^2 J Cp. ३ P °चाः ।. ४ Rw read °सद्विथुरो. All our authorities have °सद्विथुरो. Rw's MSS. also have the same accent here as our authorities (*vide* Whitney's *Index*).

वैश्वानरस्यैनं दंष्ट्रयोरपि दधामि ॥ ३ ॥

वैश्वानरस्य । एनम् । दंष्ट्रयोः । अपि । दधामि ॥ ३ ॥

एवानेवाव सा गरत् ॥ ४ ॥

एव । अनेव । अव । सा । गरत् ॥ ४ ॥

यो३ऽस्मान् द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु ॥ ५ ॥

यः । अस्मान् । द्वेष्टि । तम् । आत्मा । द्वेष्टु । यम् । वयम् । द्विष्मः । सः । आत्मानम् । द्वेष्टु ॥ ५ ॥

निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम ॥ ६ ॥

निः । द्विषन्तम् । दिवः । निः । पृथिव्याः । निः । अन्तरिक्षात् । भजाम ॥ ६ ॥

सुयामंश्चाक्षुष ॥ ७ ॥

सुऽयामन् । चाक्षुष ॥ ७ ॥

इदमहमामुष्यायणे३मुष्याः पुत्रे दुष्वप्न्यं मृजे ॥ ८ ॥

इदम् । अहम् । आमुष्यायणे । अमुष्याः । पुत्रे । दुःऽस्वप्न्यम् । मृजे ॥ ८ ॥

यददोअदो अभ्यगच्छन् यद् दोषा यत् पूर्वां रात्रिम् ॥ ९ ॥

यत् । अदःऽअदः । अभिऽअगच्छन् । यत् । दोषा । यत् । पूर्वाम् । रात्रिम् ॥ ९ ॥

यज्जाग्रद् यत् सुप्तो यद् दिवा यन्नक्तम् ॥ १० ॥

यत् । जाग्रत् । यत् । सुप्तः । यत् । दिवा । यत् । नक्तम् ॥ १० ॥

यदहरहरभिगच्छामि तस्मादेनमव दये ॥ ११ ॥

यत् । अहःऽअहः । अभिऽगच्छामि । तस्मात् । एनम् । अव । दये ॥ ११ ॥

तं जहि तेन मन्दस्व तस्य पृष्टीरपि शृणीहि ॥ १२ ॥

तम् । जहि । तेन । मन्दस्व । तस्य । पृष्टीः । अपि । शृणीहि ॥ १२ ॥

---

१ C V यो१°. २ $\overset{h}{B}$ $\overset{m}{S}$ °चाक्षुषः. ३ P °यामम् ।. We with $\overset{2}{P}$ J Cp. ४ B C E $\overset{m}{K}$ R Dc Cs दुःष्व°. We with A $\overset{h}{B}$ D K $\overset{m}{S}$ V. ५ All our authorities have °च्छन् distinctly Rw's MSS. too have, it appears from the *Index*, the same reading. The emendation to °च्छम् made by Rw does not appear to be quite necessary, though at first sight desirable. ६ B $\overset{h}{B}$ E यद्दिवा. ७ R $\overset{m}{S}$ Cs दयेत्. ८ C K $\overset{m}{K}$ V Cs P J Cp °ष्टी°. We with A $\overset{h}{B}$ D E R $\overset{m}{S}$ Dc $\overset{2}{P}$.

स मा जीवीत् तं प्राणो जहातु ॥ १३ ॥

सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ १३ ॥

इति द्वितीयेऽनुवाके तृतीयं पर्यायसूक्तम् ॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥ १ ॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । ऋतम् । अस्माकम् । तेजः । अस्माकम् । ब्रह्म । अस्माकम् । स्वः । अस्माकम् । यज्ञः । अस्माकम् । पशवः । अस्माकम् । प्रऽजाः । अस्माकम् । वीराः । अस्माकम् ॥ १ ॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥ २ ॥

तस्मात् । अमुम् । निः । भजामः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । असौ । यः ॥ २ ॥

स ग्राह्याः पाशान्मा मोचि ॥ ३ ॥

सः । ग्राह्याः । पाशात् । मा[1] । मोचि ॥ ३ ॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥ ४ ॥

तस्य । इदम् । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ४ ॥

जितम् ०।० । स निर्ऋत्याः पाशान्मा मोचि । ० ॥ ५ ॥

०। सः । निःऽऋत्याः । पाशात् ।० ॥ ५ ॥

जितम् ०।० । सोऽभूत्याः पाशान्मा मोचि । ० ॥ ६ ॥

०। सः । अभूत्याः । पाशात् ।० ॥ ६ ॥

जितम् ०।० । स निर्भूत्याः पाशान्मा मोचि । ० ॥ ७ ॥

०। सः । निःऽभूत्याः । पाशात् ।० ॥ ७ ॥

जितम् ०।० । स पराभूत्याः पाशान्मा मोचि । ० ॥ ८ ॥

०। सः । पराऽभूत्याः । पाशात् ।० ॥ ८ ॥

---

१ P मा । We with P[2] J Cp.

